**"संशितं म इदं ब्रह्म संशितं वीर्यं[१] बलम् ।**

**संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः ॥"**

**तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत ।**

**इन्द्रस्य वज्रात् तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥**

**एषां क्षत्रमजरमस्तु जिष्णवेइषां चित्तं विश्वेऽवन्तु देवाः ॥**

(अथर्ववेदः ३.१९.१, ४, ५)

संस्कारेषु कर्मसु वा दीक्षा दक्षताम् आदधाति दक्षतां पोषयतीत्यर्थः ।

व्रतेन सा दीक्षा प्राप्यते, दीक्षया च दक्षिणा,

दक्षिणया च श्रद्धा, च सत्यं प्राप्यते[१] ।

शीतोष्णहानिलाभसुखदुःखमानापमानादिद्वन्द्वान् सोढ्वा राष्ट्रहिताय सदैव जागरूकभावना तपस्येति प्रोच्यते ।

ऋषीणामियं जागरूकता निम्नाङ्कितमन्त्रे द्रष्टव्या—

**"वयं राष्ट्रे जागृयाम पुरोहिताः ।[२]**

वयं पुरोहिताः स्वराष्ट्रे सदा जागरूकाः स्याम । वैदिककाले राष्ट्रहिताय सततं जागरूकतया स्थितिः ऋषीणामेक आदर्श आसीत्। मन्ये तस्यैवादर्शस्य अयं परिणामोऽस्ति,यद् वैदिकराष्ट्रं विश्वस्मिन् सर्वश्रेष्ठ राष्ट्रमभूत्, यत्र वैदिकसंस्कृतिरद्यापि समनुभूयते । तस्मिन् समये ऋषीणां मन्तव्यमिदमासीत् यद ब्रह्मचर्येण तपसा चैव राजा राष्ट्रं प्रभवति -

---

१-व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोतिश्रद्धया सत्यमाप्यते ॥

२-शु.यः ७/२३ तै०स० १.७.१.१.।

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥
ब्रह्मचर्येण कन्या३ युवानं विन्दते पतिम् ।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति ॥
ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्व१राभरत् ॥२

ब्रह्मज्ञानं राष्ट्रीयतायाः सुमहान् गुणोऽस्ति । तेन राष्ट्रं (पराधीनताया मुक्तं भूत्वात्मनः) ब्राह्मीं प्रतिष्ठां प्राप्नोति । ऋषीणां ज्ञानस्यैवेदं महत्वं

यद् भारतवर्षं जगद्गुरुत्वस्य श्रेयः प्राप्तवान् । यस्य देशस्य मनीषिणो वेदानां ब्राह्मणानां च रक्षणं, सौलभ्यं अस्ति, तत्र कस्यापि राष्ट्रभक्तस्य स्वाभिमानो (गर्वः) भवितुमर्हति । वैदिकग्रन्थेषु निहितं ज्ञानं सम्पूर्णमानवजातेः कल्याणायास्ति । (यतो हि एतस्य प्रणयनमेव "कृण्वन्तो विश्वमार्यम्" । इति भावनयाक्रियत ।) आत्मसमपर्णात्मको भावो यज्ञो राष्ट्रियभावनाया एकोऽन्यतमो विशिष्टो गुणोऽस्ति । येन सर्वोऽपि जनः राष्ट्रहिताय सर्वथा बलिदानाय समुद्यतो भवेत् । मम सर्वाणि कार्याणि राष्ट्रभूमेः कल्याणकराणि स्युरिति इयं भावना प्रत्येकराष्ट्रभक्तस्य मनसि समुत्पद्येत । एतदर्थं तेन स्वराष्ट्रभूमेरेव सेवा प्रकर्तव्या । पृथिवीसूक्तस्य प्रथमे मन्त्रे ऋषेर्भावना निम्नाङ्कितरूपेणाभिव्यक्ता[1]—

अस्याशयो यन्मम मातृभूमिर्मम भूतस्य, भविष्यस्य वर्तमानस्य च स्वामिन्यस्ति, सा स्वक्षेत्रे मह्यं विस्तृतं कार्यक्षेत्रं दद्यात् । वस्तुनो यस्मिन् देशे ये निवसन्ति तस्य देशस्य भूखण्डस्तेषां राष्ट्रभूमिर्भवति।

---

१-"सा नो भूतस्य भव्यस्य पत्न्युरुं पृथिवी नः कृणोतु" ॥ (अथर्व० १२/१/१)

परन्तु राष्ट्रं भूखण्डमात्रं नास्ति, अपि तु तस्मिन् भूखण्डे विकसिता संस्कृतिर्भाषा च तत्रैवान्तर्भवति ।

अतो यत्र राष्ट्रे वयं निवसामस्तस्य राष्ट्रस्य प्रत्येकं वस्तु मृत्तिकास्तु, पर्वतोऽस्तु, नद्यः सन्तु, वनानि सन्तु, पशवः सन्तु, तत्रत्या संस्कृतिरस्तु, परम्परा रीतिर्वास्तु ।

(अथवा जनमानसं) जनभाषा वा चास्तु (प्रति प्रेमकरणं आत्मीयता प्रतीतिस्तथा तेषां विकाशाय समृद्धये च यथाशक्ति दक्षतानुसारेण सततं प्रयत्नशीलता) राष्ट्रभक्तस्य भृशमनुराग एव राष्ट्रीयता निगद्यते ।

मनुष्यः स्वबुद्धेः प्रयोगं कृत्वा विचारस्य कर्मणश्च क्षेत्रे यत् सृजति (निर्माति) सा संस्कृतिः कथ्यते । परिचिन्तनद्वारा सरसं सुन्दरं कल्याणमयञ्च विधातुं मनुष्यो यान् प्रयत्नान् करोति, ते प्रयत्नाः संस्कृतिरूपेण विपरिणमन्ते (तिष्ठन्ति) ।

मानवीयसंस्कृतेश्चतस्रः प्रमुखवृत्तयो धर्मोऽर्थः कामो मोक्षश्च सन्ति। येषां प्रवर्तनाय समाजे समुचितवातावरणस्य व्यवस्था आवश्यकी वर्तते । अस्यां दिशि समाज सङ्घटनाय यदुत्तरदायित्वं तत्परम्परया राज्ञ उच्चकोटि विचारणामाचार्याणाञ्चाभवत् । विचारका आचार्याश्च समाजस्य सुदृढव्यवस्थायै योजनां विदधानाः (कुर्वन्तः) समासन् । तथा राजगणस्ता योजनाः सफलयन्तः (सफलं कुर्वाणाः) समासन् । ऋषिः स्वमनोर्नीतनायकस्य मस्तकोपरि राजतिलकं विदधानः स्वस्य सुरक्षितराष्ट्रस्य समुपलब्धये कामनां करोति स्म ।

राष्ट्रप्रतिष्ठार्थमृषयो यज्ञद्वारा देवार्चनं प्रकुर्वन्ति स्म ।

ऋषयो राज्ञः समुपदिशन्ति स्म, यद् राजानः सर्वेभ्यः समानतया लाभं प्रदुद्युः, तेजस्विनः स्युः, अपराधिनो दण्डयन्तु, राष्ट्ररक्षाकार्ये उग्राः सन्तोऽपि प्रजाभ्यः संग्रहीतं धनं प्रजाकल्याणकार्ये एव विभक्तं

कुर्वन्तं, राज्यकल्याणायार्थिकव्यवस्थायै सावधानास्तिष्ठन्तु, ऋषीणां राजभ्य इयं मन्त्रणा भवति स्म, यत्ते स्वकीयं राष्ट्रमक्षुण्णं विधातुं सीमान्तराजैः सह घनिष्टसम्बन्धं कृत्वा तेषां समर्थनं प्राप्नुवन्तु।

ऋषीणामियं मान्यता आसीद् यत्प्रजानुराग एवं राज्यस्थिरतायाः कारणमस्ति ।

अत एव राजानः स्वराष्ट्रस्य सर्वात्मनां सुरक्षां कुर्युः, तथा समस्तप्रजानां पालनं कुर्वन्तः एकच्छत्रशासका भवेयुः ।

राष्ट्रस्य पूर्णसुरक्षायै ऋषीणामयमुद्घोष आसीत् यत्पूर्वोक्तानि सत्यादीनि एव राष्ट्रभूमिं सुरक्षितां सम्पादयन्ति—

**"सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्मयज्ञः पृथिवी धारयन्ति"** ।

(अथर्ववेदः १२.१.१)

वैदिकवाङ्मये प्रतिस्थानमयमुल्लेखो मिलति यत्—

ब्रह्मशक्तिक्षात्रिशक्ती राष्ट्रधारणाय मुख्ये शक्ती स्तः । एतयोर्मध्ये यदि क्षात्रशक्तिर्ब्रह्मशक्तेरतिक्रमणं कुर्यात्तदा तदा राष्ट्रं विनश्यति—

**उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति ।**
**परा तत् सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते ॥**
**तद्वै राष्ट्रमास्रवति नावं भिन्नामिवोदकम् ।**
**ब्रह्माणं यत्र हिंसन्ति तद राष्ट्रं हन्ति दुच्छुना ॥**

(अथर्ववेदः ५.१९.६.९)

अत एव ऋषय उपर्युक्तयोरुभयोः शक्त्योरैक्याय विशेषरूपेण प्रयतितवन्तः । तेषामयं निर्देशश्चास्ति यद् यस्मिन् राष्ट्रे इदं शक्तिद्वयं मिथः सम्भूय कार्यं करोति, तदा तद्राष्ट्रं श्रेष्ठं भवति । तस्य पतनं न जायत । तथाच—

**यत्र ब्रह्म च क्षत्रञ्चसम्यञ्चौ चरतः सह ।**
**तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥**

(शुक्लयजुर्वेदमाध्यन्दिनी संहिता २०.२५)

ऋषीणामियमपि कामना वर्तते यद् देशस्य प्रतिव्यक्तिर्यस्य कस्यापि वर्णस्य जातेर्वर्गस्य चास्तु । सर्वैरेकीभूय सम्पूर्णराष्ट्रस्य हितभावनामनुसन्धाय स्वस्वकार्यक्षेत्रेषु अग्रसरैर्भवितव्यम्, गावो मधुरदुग्धारां पातयन्तु, धनधान्यवर्षणं जायताम्, औषधञ्च लाभकरं स्यात् वृषभाश्वादयश्च बलशालिनो भवेयुः, राष्ट्रस्य सर्वतोभावेनोन्नतेः समृद्धेश्च आकाङ्क्षया प्रवृत्तोऽयं मन्त्रो वैदिकं राष्ट्रगीतं मन्यते ।

अस्यायमभिप्रायो हे ब्रह्मन्! मम राष्ट्रे ब्रह्मवर्चस्वी ब्राह्मणः शूरवीरो बाणविद्याकुशलः, (दुष्ट शासको महारथी क्षत्रियः, दोग्ध्र्यौ गावः भारवहनसमर्था वृषभाः, शीघ्रगामिनोऽश्वाः, गार्हस्थ्यधर्मधारिण्यो ललनाः (नार्यः), रथायानसम्पन्नाः सभ्याः, युवानश्च जायन्ताम् । इष्टावसरेषु मेघा वर्षन्तु, मम राष्ट्रे फलवत्यः ओषधयः परिपक्वा भवन्तु । योगक्षेमौ च सुरक्षितौ भवेताम् । सर्वे जना राष्ट्रसमृद्धये प्रयत्नशीला भवन्तु । तथाच—

**"आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः**
**शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री**
**धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः**
**सभेयो युवास्य यजमानस्य वीरो जायतां**
**निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न**
**औषधयः पच्यन्तां योगक्षेमो नः कल्पताम्"**

(शुक्लयजुर्वेदः २२.२२)

ऋषय इदं ज्ञातवन्तो यत् तेषां राष्ट्रे बहुभाषाभाषिणोऽनेकधार्मिकविश्वासवन्तश्च जना निवसन्ति, अत एव भाषाय धार्मिकविश्वासस्य च

विविधता राष्ट्रियभावनां विखण्डितां कर्तुं न शक्नुयात् । अतः ऋषय एवं सन्धाय राष्ट्रं गृहमेव अमन्यंत, यत्र एकपरिवारस्य विभिन्नस्वभावा विभिन्नवयः पुरुषा नार्यश्च सहैव निवसन्ति । राष्ट्रियभावनां मूर्तरूपां कर्तुं सम्पूर्णराष्ट्रवासिनः परिवाररूपतया द्रष्टुं या भावना सा मर्तामतिरुदात्तकल्पना अस्ति—

**''जनं बिभ्रंती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् ।**
**सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती'' ॥**

(अथर्ववेदः १२.१.४५)

मन्त्रेणानेन स्पष्टमिदं प्रतीयते यद्—यस्य राष्ट्रस्य जनाः स्वभाषा-धर्मादिभेदान् विस्मृत्य परिवाररूपेण निवसन्ति, तद्राज्यं समृद्धिं प्राप्नोति।

अनाद्यपौरुषेयवैदिकवाङ्मये राष्ट्रीयभावनाया यत् स्वरूपं प्रतिपादित-मस्ति तस्य विशिष्ट आदर्शोऽस्ति, तस्य शाश्वतं महत्त्वञ्चापि अस्ति ।

वैदिकराष्ट्रवादस्य मूलभूततत्त्वानां ज्ञानं यदि मानवानां स्यात् तदाद्यत्वे राष्ट्रं निःसन्देहतया साम्प्रदायिकतां पृथक्त्ववादमातङ्कवादञ्च सर्वथा परित्यज्य सुखेन तिष्ठेयुः ।

तदानीं सर्वे जनाः परस्परमात्मीयताभावनायाः सञ्चारं कुर्युः । सङ्घटिताश्च भूत्वा सम्पूर्णराष्ट्रहिताय कार्यं करिष्यन्ति ।

वस्तुतो विशालहितसिध्यर्थमल्पहितं परित्यज्य एव परमार्थः साध्यते। अतः स्वार्थपरित्यागेनैव राष्ट्रहितं सम्भवतीति वैदिकराष्ट्रवादस्यायं सन्देशः ।

**इति प्रथमः परिच्छेदः ।**

# अथ द्वितीयः परिच्छेद

*पुनः ऋग्वेदस्य दशममण्डले राष्ट्रहिताय ईश्वरस्य प्रार्थना कृतास्ति–*

"तेनास्मान् ब्रह्मणस्पतेऽभिं राष्ट्राय वर्तय" । (१०.१७.१) ।

हे ब्रह्मणस्पते! अस्मान् राष्ट्रहितार्थं सम्बर्द्धय । एवं प्रकारेणाथर्ववेदस्य षष्ठकाण्डे चत्वारिंशत्तमे सूक्ते राष्ट्रकल्याणभावना वर्तते—

**अस्मै ग्रामाय प्रदिशश्चतस्त्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु ।**

**अशत्विन्द्रो अभयं नः कृणोन्त्वन्यत्र राज्ञामभि यातु मन्युः ॥२॥**

**मम ग्रामं देशञ्चभितः सर्वा दिशः सुखपरिपूर्णाः सन्तु ।**

**प्रभूतमन्नमुत्पद्येत, सविता देवः नः कल्याणं कुर्यात् ।**

**शत्रुरहित इन्द्रो मह्यं निर्भयतां प्रदद्यात् ।**

राजा शत्रुभ्यः कुप्येत क्रुध्येद्वा न मह्यम् (राज्ञां क्रोधस्य शत्रुविषये मत्तः अन्यत्र भवेत्) प्रतिराष्ट्रमुभयविधाः जनाः भवन्ति—

सदाचारिणो दुराचारिणश्च । सदाचारिजनाः स्वसद्गुणैः राष्ट्रं समुन्नतं सशक्तञ्च विदधति, तथा दुराचारिणो राष्ट्रस्य क्षतिं कुर्वते । अथर्ववेदे एतादृशानां जनानां शत्रुभावनया विनाशार्थं प्रार्थना कृतास्ति—

**योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः । (अ०वे० २.२१.१) ।**

**योऽस्मान् द्वेष्टि तथा यं प्रति अस्माकं द्वेषोऽस्ति ।**

अथर्ववेदस्य द्वादशकाण्डे वर्तमाना इयं निम्नाङ्किता पङ्क्ती राष्ट्रपुष्टिदृष्ट्या अत्यन्तमर्थवती वर्तते—

**"सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु"।**

सा अस्माकं भूतभविष्यवर्तमानस्थितीनां पालनकर्त्री, अस्माकं मातृभूमिः कार्यसम्पादनाय विस्तृतं स्थानं प्रद्यात् । अस्मिन् मन्त्रे स्पष्टरूपेणोक्तं कस्को धर्तुं शक्नोति । सर्वे मनुष्याः स्वराष्ट्रं धर्तुं न प्रभवन्ति, तस्याः पोषणमपि कर्तुं न शक्नुवन्ति, परन्तु ये मनुष्याः विशेषगुणैर्युक्ताः सन्ति, त एव राष्ट्रमुन्नेतुं शक्नुवन्ति । सर्वप्रथमदृष्ट्या राष्ट्रीयगुणः सत्यमस्ति, येषु मनुष्येषु सत्यप्रियता सत्यपालनाय आत्मसर्वस्वार्पणभावना अस्ति, त एव राष्ट्रं समुद्धर्तुं शक्नुवन्ति । वैदिकराष्ट्रियतायां सत्यमत्यन्तं महीयते । अत एव सर्वैर्मनुष्यैरुपर्युक्तगुणा अवश्यं स्वजीनभागेऽवतारनीयाः । ततश्चेमामाकाङ्क्षां कुर्युः—यया तेषां राष्ट्रे विस्तृतं कार्यक्षेत्रं प्राप्यते ।

यस्मिन् राष्ट्रे उपर्युक्तैर्गुणैः सम्पन्नजना निवसन्ति अथवा ते राष्ट्रस्य नेतृत्वं वहन्ति (कुर्वन्ति) । एवम्भूतमेव सुवाह्यं (वहनयोग्यम्) प्रोच्यते । एवम्भूतस्यैव राष्ट्रस्य कृते प्रार्थना कृता अस्ति—

**"बृ॒हद् रा॒ष्ट्रं सं॒वे॒श्य॑ःदधातु"** । **(अ०वे० ३.८.१)**

राष्ट्रोन्नतये राष्ट्रियैकता अत्यन्तमावश्यकी वर्तते । राष्ट्रस्य प्रगतिस्तदा एव भवितुमर्हति यदा विविधभाषाभाषिणो विविधधर्मावलम्बिनश्च मानवाः समानकुटुम्बे एकस्मिन्नेव गृहे निवसन्तो भ्रातर इव एकस्मिन् देशे परस्परं व्यवहरन्तु । यतः सर्वेषां माता इयं मातृभूमिरेव । अयमेव मानवधर्मो यत् क्षुद्रभेदान् गौणतया विज्ञाय परस्परं सम्भूय च स्वगृहस्य स्वदेशस्य स्वराष्ट्रस्य च हितं कुर्वन्तु । राष्ट्रस्य घटका यस्मिन् समये पारस्परिकभेदप्राधान्यमनुभूय मिथः कलहायन्ते, तस्मिन् समये राष्ट्रस्य शक्तिः क्षीणा (दुर्बला) भवति; परन्तु यदा भेदभावान् तिरस्कृत्य देशहितार्थकार्येषु ते संलग्ना भवन्ति; तदा तेषां शक्तिर्वर्धते । राष्ट्रस्योन्नतिश्च प्रजायते । कस्मिंश्चिद् देशे अथवा राष्ट्रे भाषा वंशप्रवृत्त्याद्यनेककारणैर्जनानां परस्परमनेके भेदा

भवन्ति ।

अद्यत्वे संसारमध्ये एकोऽपि देशस्तथा नास्ति, यस्मिन् देशे उपर्युक्ता भेदा न स्युः । परन्तु राष्ट्रस्य विकाशशीला जनाः असामञ्जस्यशीलानां भेदानामुपरि ध्यानं न कृत्वा राष्ट्रहिताय समर्पिता भवन्ति, अनेन सदैव वैदिकानामृषीणामियमवधारणा अस्ति—

**"यो जागार तमृचः कामयन्ते" ।**

इत्यनेन सह राष्ट्रस्य व्यक्तेः समाजस्य सर्वविधप्रोन्नतये अग्रेसरपुरोहितानां नेतृणामधिनेतृणामुत्तरदायित्ववतां जनानाञ्चेदं कर्तव्यमस्ति यत् ते उन्निद्रभावेन राष्ट्रहितसाधने तत्पराः स्युस्तस्यैव भावस्योद्घोषं यजुर्वेदे राष्ट्रोन्नायकः ऋषिः करोति बहुत्र लक्ष्यते यजुर्वेदे । अथर्ववेदेऽपि अनेके मन्त्रा राष्ट्रियभावनापक्षे प्रवर्तन्ते—

(क) **"गातुं प्रयश्यन्निह राष्ट्रमाहाः" ।**
**उन्नतिमार्गं पश्यन् त्वं राष्ट्रमुन्नतिमार्गं प्रति नय ।**

(ख) **"आते राष्ट्रमिह रोहितोऽऽहार्षीत्"**
**तव राष्ट्रं यस्यां परिस्थितौ तेन वीरेण**
**आनीतम्, अतस्तस्यैव संरक्षणं विधेयम्-**

(ग) **"सा ते राष्ट्रमनुक्त पयसा घृतेन"**
**तव राष्ट्रे दुग्धं घृतञ्च परिपूर्णमस्तु, एते**
**पुष्टिहेतवः पदार्था आधिक्येन प्राप्येरन् ।**

(घ) **"ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि" ।**
**ज्ञानेन दुग्धेन च पुष्टस्त्वं स्वप्रनजाजनेषु राष्ट्रे**
**जागरणं कुर्याः । सावधानश्च भव, शयनं मा**
**कुरु राष्ट्रे प्रबुद्धः सन् राष्ट्रमुन्नतं विधातुं प्रयत्नं कुरु।**

(ङ) **"इदं राष्ट्रमकरः सूनृतावत्" ।**
**इदं राष्ट्रं सत्यनिष्ठमानन्दप्रसन्नं सम्पादय ।**

(च) ''पृथिवीञ्च रोह, राष्ट्रञ्च रोह, द्रविणञ्च रोह, प्रजाञ्च रोह, अमृतञ्च रोह'' ।
पृथिव्या राष्ट्रस्य धनस्य प्रजाया अमरत्वस्य च वृद्धिं कुरु ।

(छ) ''ये राष्ट्रभृतस्तैष्टे राष्ट्रं दधातु सुमनस्यमानाः'' ।
ये राष्ट्रपोषका वीरा विलसन्ति तेषां सहयोगेन तवेदं राष्ट्रमुत्तमेन मनसा ध्रियते ।
भिन्नधर्मेषु स्थितैरपि सर्वैः परस्परं सम्भूय मातृभूमेरुपासनायै सावधानैर्भवितव्यम् ।
एतेषु भिन्नेषु धर्मेषु सत्स्वपि सर्वैः स्वकीयं राष्ट्रमभिन्नतया अनुभवनीयम् ।
समेषां कृते इदमवश्यं ज्ञेयमस्ति यत् अनेकेषु भेदेषु सत्स्वपि तान् भेदान् विस्मृत्य एकगृहस्य कुटुम्बभ्रातर इव एकभावनया सहैव सर्वे तिष्ठन्तु । अग्निममन्त्रस्यायमेव उपदेशः सर्वैः राष्ट्रभक्तैश्च तत्र ध्येयमवश्यम् ।

असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या विभर्ति पृथवी नः प्रथतां राध्यतां नः ॥

(अथर्ववेदः १२.१.२)

यस्यां मातृभूमौ मनुष्याः उच्चावचभावे समतायां (समानतायां) च निर्वैरभावं कुर्वन्ति परस्परं न कलहायन्ते तथा च या मातृभूमिः अनेकगुणयुक्तमौषधमुत्पादयति सा मामकी मातृभूमिर्मम कीर्तिं वर्धयेत्। अयं मन्त्र इत्थमुपदिशति यत् सति वैषम्येऽपि राष्ट्रहितं कथं साधयितुं शक्यते ।

यद्यपि मनुष्याः भेदभावस्य निराकरणाय चेष्टां कुर्वन्तु नाम,

शरीरेन्द्रियमनोबुद्ध्यादीनां न्यूनाधिकविकारवशात् तेषां व्यवहारकुशलताया न्यूनाधिकभावेन तेषु उच्चावचनीचमध्यमभावप्रयोज्यभेदः स्वाभाविकोऽस्ति ।

सर्वे मनुष्याः समानयोग्यतावन्तः सर्वथा समानाः भवेयुरिति न सम्भाव्यते । अस्यामसमानस्थितौ सत्यामपि तथा प्रयतितव्यम्, येन अभेदध्यानेन सर्वेषां समुत्कर्षः स्यात् । यदा परस्परं युद्धं जायते तदा राष्ट्रशक्तिः क्षीणा दुर्बला भवति । यदा एकः समाजः अन्यस्य समाजस्य क्षतिं करोति, यदा एका जातिरन्यस्यै जात्यै कष्टं ददाति तदा तद्राष्ट्रं क्षीणं भवति । अतो राष्ट्रहितदृष्ट्या प्रतिदेशं प्रतिसमाजमेकताया आवश्यकतास्ति । इदमेव बोधयितुं मन्त्रे प्रोक्तं—

**"यस्याः मानवानां मध्यतो बहु असम्बाधम्"** ।

यस्यां मातृभूमौ मनुष्येषु निर्भरभावस्तिष्ठति सा एव मातृभूमिः स्वपुत्रेभ्य उत्तमं धनं दातुं शक्नोति । परन्तु यस्यां मातृभूमौ लोकाः परस्परं वैरभावं कुर्वन्ति तत्र स्थितानां जनानां भरणं पोषणमपि साधुरीत्या न भवितुमर्हति । कश्चनोत्तमः कश्चन ज्ञानी कश्चन अज्ञानी अथवा अन्योऽपि कश्चिद् भेदोऽस्तु, परन्तु सर्वे जना हृष्टाः पुष्टाश्च सन्तु, मातृभूमि—रक्षायां समानविचाराश्च सन्तु, स्वमातृभूमिं प्रति पुत्रत्वसम्बन्धः कीदृशोऽस्ति इत्येतत्सर्वं विज्ञाय सदैव स्वमनः प्रबुद्धं कुर्यात् । अस्य भावस्य पुष्टिमयं मन्त्रः करोति—

**"त्वज्जा॒तास्त्वयि॑ चरन्ति॒ मर्त्या॒स्त्वं बि॑भर्षि**
**द्वि॒पद॒स्त्वं चतु॑ष्पदः"** ।
**तवे॒मे पृ॑थिवि॒ पञ्च॑ मान॒वा येभ्यो॒ ज्योति॑र॒मृतं॒**
**मर्त्ये॑भ्य उ॒द्यन्त्सूर्यो॑ र॒श्मिभि॑रातनो॒ति ॥**

(अ०वे० १२.१.१५)

हे मातृभूमे! त्वत्तः समुत्पन्नो मनुष्यस्त्वयि एव परिभ्रमाम । त्वमेव द्विपदां चतुष्पदां पोषणं करोति । वयं मनुष्यास्तवैव स्मः । प्रतिदिनमुद्यन् सूर्यः स्वकिरणद्वारा मनुष्येभ्यस्तेजोऽमृतं च ददाति।

सर्वप्रथमं वयं स्वराष्ट्रस्य स्मः । तदनन्तरं स्वपथस्य (आत्ममार्गस्य) प्रत्येकमनुष्यस्यायं सिद्धान्तो भवेत् ।

अथर्ववेदीयराष्ट्रगीते प्रतिमन्त्रं कीदृशंमहत्त्वमुपदिष्टमस्ति । अस्माकं पतनदशायामिमे उपदेशा मूल्यवन्त; सन्ति, तदा अस्मानुत्थापयितुं शक्नुवन्ति । यतो वैदिकराष्ट्रचिन्तनस्य इदं वैशिष्यमभूत् यत् स राष्ट्रस्य सर्वोन्नतेः संरक्षणार्थं वैयक्तिकशुभमङ्गलमयाचरणस्योत्प्रेरकं तत्त्वं मन्यते ।

यत उदात्तभावनया सम्पन्नस्य जनस्य ऐकात्मभावसंसूचकमेव राष्ट्रमस्ति ।

अत एव वैदिकराष्ट्रस्याधिनेता देशस्य वैदिकानां राजनैतिकानां शिक्षाविदां धार्मिकनेतृणाञ्चानेन मन्त्रेणामन्त्रणं करोति ।

देशराष्ट्रप्रोन्नतिमहायज्ञे स्वसर्वस्वस्य आहुतिदानाय—

**"हुवे सोमं सविस्ततारं नमोभिर्विश्वानादित्याह्न अहमुत्तरत्वे**

**अयमग्निर्दीदायद् दीर्घमेव सजातैरिद्धोऽप्रतिब्रुवबद्भिः"॥**

**(अ०वे० ३.८.३)**

एवमेव वाजसनेयिमाध्यन्दिनसंहिताया दशमाध्याये राष्ट्रदासूक्तमाध्यमेन सर्वथा सम्पन्नैः उदात्तचरितैर्निवासिभिर्जनैरापूरितस्य सुराष्ट्रस्य कामना कृतास्ति अथवा परिकल्पना कृता वर्तते—

**"वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा**

**वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि**

**वृषसे॒नो॒ऽसिराष्ट्र॒दा रा॒ष्ट्रं मे देहि॒ स्वाहा**

**वृषसे॒नो॒ऽसि राष्ट्र॒दा रा॒ष्ट्रममुष्मै देहि''।**

**(शु०यजु० १०.२)**

राष्ट्रियताया विचार ऋषीणामधिकश्रमस्य तपसश्च परिणामोऽस्ति—

**''ततो राष्ट्रं .बलमोजश्च जातम्'' ।**

तेन राष्ट्रे बलमोजश्चाभूत् । मन्त्रान् साक्षात्कृत्य ऋषयो राष्ट्रनिर्माणउर्थं यथा प्रयतितवन्तस्तथैव अन्ये पूर्वजा अपि प्रयति-तवन्त:—

**''ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च।**

**भूतं भविष्यदुच्छिष्टे वीर्यलक्ष्मीर्बलं बले''॥**

**(अथर्ववेद: ११.७.१७)**

सत्यमृतं तपो राष्ट्रं श्रमो धर्मो भूतं भविष्यं वीर्यं लक्ष्मीर्बलञ्चेत्यादि सर्वं परमेश्वरमाश्रित्य अभवत् ।

तथाहि—

**''अजीतोऽहतो अक्षतोऽध्याष्ठां पृथिवीमहम्''।**

**(शु०यजु० १०.२)**

अहतोऽक्षतश्च भूत्वाहमस्या: पृथिव्या अध्यक्षो भविष्यामि । ब्रह्मचर्यरूपेण तपसा राजा राज्यं रक्षति । राजा महाराज: सम्राट् प्रधानमन्त्री सेनानायक: सैनिको ग्रामाधिकारी अन्यो वा कश्चन सर्वे एते ब्रह्मचर्यं चरन्त: सत्यं समाचरन्तु । यस्मिन् राज्ये ज्ञानप्रचारका विद्यार्थिन: संरक्षका उत्तमा ब्रह्मचारिण: सन्ति, तस्य राज्यस्य व्यवस्थाया: कृते न चिन्तनीयम्? वेदमतेन इयमेव आदर्शराष्ट्रव्यवस्थास्ति ।

"येन देवं सवितारं परि देवा अधारयन्।
तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन"॥

(अथर्ववेदः १३.१.१०)

हे ब्रह्मणस्पते! राष्ट्रहिताय महतः क्षात्रबलस्य धारणं कुरु ।

"उदेहि वाजिन् यो अप्स्व१न्तरिदं राष्ट्रं प्रविश सूनृतावत।
यो रोहितो विश्वमिदं जजान स त्वा राष्ट्राय सुभृतं बिभर्तु॥

(अथर्ववेदः १३.१.१)

हे सामर्थ्यवन् आत्मदेव त्वमुदयं प्राप्नुहि । यस्त्वमापोमयप्राणेभ्यः परोऽसि, स त्वमस्मिन् प्रियराष्ट्रे प्रविश ।

यो देवः एतत्सर्वमुत्पादयामास, सोऽस्य राष्ट्रस्य उत्तमभरणपोषणपूर्वकं त्वां दधातु (धारणं करोतु) । अस्मिन् राष्ट्रे सोमादिवनस्पतीनां पोषणं कुर्वन् जलस्यौषधेर्गवां मानवानां प्राणिनाञ्च निवासं कारयत्त ।

ये देवा राष्ट्रभूतोऽभितो यन्ति सूर्यम्।
तैष्टे रोहितः संविदानो राष्ट्रं दधातु समनस्यमानः॥

(अथर्ववेदः १३.१.३५)

ये राष्ट्रपोषका देवाः सूर्यमभितः परिभ्राम्यन्ति, तैः सार्द्धं मिलितो रोहितः सुप्रसन्नो भूत्वा तव राष्ट्रं विभर्तु । ये राष्ट्र भरणपोषण-कर्तुः सूर्यस्योपासनां कुर्वन्तः सूर्यस्य प्रकाशे निवसन्ति ते बलं प्राप्नुवन्ति मनः संस्कुर्वन्ति तथा राष्ट्रं धारणयोग्यं सम्पादयन्ति। मम राष्ट्रभूमिरेव प्रिया मातास्ति तथा मातृभूमेर्वयं पुत्राः स्मः । अस्यायमभिप्रायो यतो वयं सर्वे देशवासिन एकस्या एव मातुः पुत्राः स्मः, अत एव वयं सत्यतो देशबन्धवः स्मः । स्पष्टमिदं प्रतीयते यत् प्रत्येकदेशस्य निवासिना

स्वमनसि अयं भावः आनेयः (निधापनीयः, संस्करणीयः)।

मातृभूमेर्भक्तानां गौरवविषये अयमृग्वेदमन्त्रो द्रष्टव्योऽस्ति—

**"ते अज्येष्ठा अकनिष्ठासउद्भिदोऽमध्यमासो महसा वि वावृधुः।**
**सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन"॥**

(ऋग्वेदः ५.५९.६)

**"अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय"।**

(ऋग्वेदः ५.६०.५)

भूमिं मातरं मन्यमानाः सर्वे सत्कुलोत्पन्नाः सन्ति। धनं वर्धयितुं सर्वे सम्मिल्य प्रयतन्ते। वेदेषु इदं सर्वं स्पष्टतया उपदिष्टमस्ति। अस्येदं कारणमस्ति—

वैदिकधर्मावलम्बिभ्य इदमुपदेष्टव्यमस्ति, यत्तेषामेतद्विचार्य मातृभूमिं प्रति राष्ट्रञ्च प्रति भक्तिर्वर्धेयुः। तथा ते स्वोन्नतेः सम्पादने समर्थाः स्युः। मम देशवासिनो राष्ट्रोन्नतये तत्पराः सन्ति, अन्यदेशावलम्बिनो जापानादिदेशवासिनो राष्ट्रहितायात्यन्तं प्रयत्नशीलाः सन्ति। यदास्माकं वेदे अप्रतिमाः (अनुपमाः) उत्तमविचाराः वर्तन्ते। यान् विचारान् दिव्यमन्त्रास्तत्रत्याः बोधयन्ति परन्तु यद्वस्तु यत्रोत्पद्यते तत्र तस्य विक्रयो न जायते, यत्र विक्रयो जायते, तत्र तद्वस्तु नोत्पद्यते, इदं कथनं चरितार्थं भवति। वस्तुतो वयमपि स्वराष्ट्रस्य समुन्नतये सर्वथा सर्वदा

---

१-तम आसीत् तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्॥
(नासदीयसूक्तीयतृतीयमन्त्रस्य प्रथमपादः १०.१२९.३)
आपो ह वा इदमग्रे सलिलमेवास। (श०ब्रा० ११.१.६.१)
अद्भिर्वा इदं सर्वमाप्तम्। श०ब्रा० १.१.१.१४-२.१.१.१४-४.५.७.७.)।
आपो वा अस्य सर्वस्य प्रतिष्ठा प्रतिष्ठा।
श०ब्रा० ३.३.३.१८.-३.९.४.७)।
इयती ह वा इयमग्रे पृथिव्यास प्रादेश पात्री तामेमूष
इति वराह उज्जघान। (श०ब्रा० १४.१.२.११)

तत्परोः भवेम । तथा यस्मिन् राष्ट्रे पारस्परिकमान्तरिकं वैमनस्यमस्ति, तस्य राष्ट्रस्य धार्मिकं वैचारिकं सामाजिकं राजनैतिकञ्च स्वातन्त्र्यं कर्तुं न शक्यते, असम्भवमिव इदं प्रतीयते यतोऽस्यां परिस्थितौ व्यक्तिवादो राष्ट्रवादः समष्टिचिन्तनवादोऽन्तर्भूतो भवति । तद्विरुद्धञ्च कार्यं समुदेति,

**यार्णवेऽधि सलिलमग्र आसीद यां मायाभिरन्वचरन् मनीषिणः ।**
**यस्या हृदयं परमे व्योऽमन्त्सत्येनावृतममृतं पृथ्विण्याः।**
**सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे॥**

(अर्थववेदः ५.६०.५)[१]

सृष्टेः प्रारम्भे सर्वत्र केवलं सलिलं बभूव । मननशीला जनाः यथासमयं कुशलतया चातुर्येण कपटेन राजनीतिनियमेन च मातृभूमेः सेवां कुर्वन्ति स्म । अयमेव अस्य मन्त्रस्याशयः । एवं रीत्या देवाः ऋषयो विद्वांसश्च मम मातृभूमिमसेविषत (सेवां कृतवन्तः) । अस्याखण्डराष्ट्रियकर्तव्यंस्य प्रारम्भमृषयश्चक्रुः ।

देवताः पुष्टिं कृतवन्तः । तथान्ये विद्वांसोऽग्रे समवर्धयन् साम्प्रतमस्माकमुत्तरदायित्वमस्ति, यदस्मिन् विषये अग्रिमं कार्यमस्माभिः क्रियेत । प्रत्येकराष्ट्रभक्तस्य कृते समुचितमिदं यदेतान् मन्त्रान् अवश्यं पश्येद् मननञ्च कुर्यात् । तथा इमान् गुणान् स्वस्मिन् सम्बर्ध्य आत्मानं मातृभूमिसेवायोग्यं सम्पादयेत् ।

राष्ट्रजनानां मध्ये अभेद्यया एकतया भवितव्यम्, परस्परं कलहो न स्यादित्यादीनि महत्त्वपूर्णानि राष्ट्रियतत्त्वानि उक्तमन्त्रेषु उक्तानि सन्ति, तानि च सदा संस्मरणीयानि समाचरणीयानि च सन्ति ।

---

**स ( प्रजापतिः ) वराहोरूपं कृत्वोपन्यमज्जत् स पृथिवीमध आर्च्छत् तस्या उपहत्यो-दमज्जत्, तत्पुष्करपर्णेऽप्रथयत् तत्पृथिव्यै पृथिवीत्वम् । ( तै०ब्रा० १.१.२.६.७ )**

सर्वथा सर्वत्र सर्वदा राष्ट्रे व्याप्तस्य क्षेत्रवादस्य जातिवादादेश्च शमनाय (शान्त्यै) उक्ता मन्त्रा महौषधिरूपा: सन्तीति ।

वैदिक-वाङ्मये राष्ट्रियताया: प्रश्नोऽनेकेषु अर्थेषु राष्ट्रियताया: वर्तमानसम्प्रत्ययनेन संयुक्तो वर्तते । राष्ट्रियताया: प्रश्नो वर्तमानसमयेऽकस्माद् महत्त्वपूर्ण: कथं सम्पद्यमानो वर्तते? किमत्र प्रश्नपृष्ठे वर्तमानसन्दर्भेषु राष्ट्रियताया उपरि कश्चाघातोऽथवा राष्ट्रियतायाज्ञाने मतभेद: अथवा विभिन्नाञ्चलेषु सङ्कुचितराष्ट्रियताया: प्रवृत्ति: अथवा विभिन्नाञ्चलेषु सङ्कुचितराष्ट्रियताया: प्रवृत्ति: प्रश्नहेतुतया प्रावर्तत? वर्तमानसन्दर्भेषु (प्रकरणेषु) जनजातिभाषा, भौगोलिकोपादानधर्मनिष्ठा, सामान्यराजनैतिकोद्देश्यं इत्यादिविषयान् आधारीकृत्य राष्ट्रियता भाषिता अक्रियत । अनया दृष्ट्या [१]हसकोहनमहोदय: स्वग्रन्थेषु "आइडिया ऑव नेशनलिज्म नामकेऽलिखत् यत् एकस्या: राष्ट्रियताया: जातित्वमाधृत्य निर्धारणं निम्नसभ्यतां प्रति गमनं भवति । आधुनिकप्रपञ्चे (संसारे) राष्ट्रियता या: पश्चात् स्थिता शक्ति: सम्बन्धिर्नी नासीत् परन्तु विचारशक्तिरासीत् । हसकोहनमहोदयोऽग्रे कथयति यद् राष्ट्रीयश्रेष्ठता कल्पितकथा स्यान्नाम, परन्तु सा परस्परं पृथग्भूतान् जनान् संगठितां करोति । सा सर्वेषु जनेषु एकताया: संगठनस्य वा भावनामभिव्यञ्जति ।

[२]एम, एच्० बोह्यवैदिकविद्वान् आधुनिकराष्ट्रियतायां भाषाया महत्त्वपूर्णं स्थानमन्यत । तदनुसारेण एको जनसमुदाय: स्वभाषाया: शब्दाकारेण (आकरभाण्डारेण) केवलां स्वस्मृतिमेवा व्यक्तां न करोति अपि तु उच्चारणे शब्दे ध्वनौ लय च स्वस्य मनोभावनां प्रवृत्तिनाञ्च

१-राजनीति: - एस०सी०सिंह: (त्यागी प्रकाशनम् मेरट) पृ० १०४
२-अस्मिन्नेव ग्रन्थे पृ० १०५

अभिव्यक्तिमुनभवति । राजनीतिविज्ञानस्य प्रमुखो विचारकः "रोज" महोदयः राष्ट्रीयताम् आध्यात्मिकावर्णे सङ्कोचयन् अवदत् यत्—राष्ट्रीयता एका भावना अस्ति तथा अद्यत्वे तस्याः परिभाषा औचित्येन कर्तुं न शक्यते । सा कौटम्बिकभावनायाः सिद्धान्तोऽस्ति सा भावना हृदयानाम् एतादृशः सङ्गमोऽस्ति, यः सकृत् स्वसत्त्वेन कदाचित् वियोगं न सहते । इयम् आध्यात्मिकी धारणास्ति ।

एतेषां लक्षणानां सन्दर्भ वैदिकवाङ्मये राष्ट्रीयतायाः कीदृशी अवधारणा अस्ति? प्रस्तुतनिबन्धे वैदिकसंहिताधारेण विषयाणां मूलबिन्दूनां गवेषणां प्रति चेष्टा कृता अस्ति यत्र राष्ट्रियताविचाारणां प्रस्फोटनम् अभवत् संहितास्वपि तेषां स्थलानां विशेषरूपेण परामर्शः कृतोऽस्ति, यत्र राजकीयविधिसम्बद्धाः अंशाः प्राप्यन्ते । सदैव कतिपयानां तासाम् उदात्तभावनानां कृतो वर्तते । येन भौगोलिकापादानानां भाषाणां जातिगतसंस्काराणाञ्च स्वमन्त्रेषु सङ्केतयन्ति (सङ्केतं कुर्वन्ति)।

भारतीयार्यविचारपद्धतौ यज्ञसंस्थायाः महत्त्वं निर्विवादमस्ति ।

यज्ञ एतादृशः उपक्रमोऽस्ति यत्र नानाविधानां विचाराणां सिद्धान्तानां जीवनपद्धतीनाञ्च जन्म अभूत् । भारतीयपरिवेशान्तर्गततया कस्यापि सिद्धान्तस्य समीक्षा यज्ञसंस्थां विना नैव कर्तुं शक्यते । तथाच शातपथि - यज्ञो वै श्रेष्ठतमं कर्म" इत्यनेन सह यज्ञो हि सर्वाणि भुनक्ति" अस्याः उक्तेरुद्घोषं करोति चतुर्थी संहिता अथर्ववेदः यज्ञं राष्ट्रधारकेषु सप्ततत्त्वेषु सम्मेलयत् । राष्ट्रीयताविचारोऽपि यज्ञतत्त्वादेव प्रावर्तत, (उर्वराभूमितः) यज्ञीयभूमिः राष्ट्रबोधिका अस्ति। यज्ञसम्बन्धिविधिनिषेधश्च राष्ट्रियतायाः मर्यादानाञ्च संरक्षणं कुरुतः । शास्त्रसम्मतविधिना कृतः यज्ञप्रयोगः यज्ञफलप्राप्तिकारको भवति ।

१-३.९.४.२३ तथा ४.३.४.३

२-९.४.१.११

तथा च—

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।।**
**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि।।**

(श्रीमद्भगवद्गीतायां १६.२३.२४)

विचारस्यास्य आकरभूतं पुरुषसूक्तं समर्थयति ।

तत्र सृष्टेः उत्पत्तिविषये अनेके प्रश्नाः समुपस्थिता भवन्ति, येषां समाधाने ऋषिः यज्ञं सृष्टेः प्रथमं स्पन्दनम् अमन्यत ।

यज्ञगतनियमाश्च संविधानरूपेणाघोषयच्च—

**"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्"** ।

(ऋग्वेदे १०.९०)

यज्ञारम्भः शिवसङ्कल्पादेव भवति । अत्र राष्ट्रस्य विभिन्नपरिधीनां पूज्यभावेन स्मरणं कृतमस्ति । अस्मिन् विधौ कदाचित् अयं बोधः सन्निहितोऽस्ति यत्—कर्ता स्वकर्मणा समग्रराष्ट्रीयपरिवेशं साक्षात् करोति । दीक्षितो भूत्वा यज्ञीयमर्यादानां पालनाय प्रतिज्ञां करोति । फलतः (वस्तुतः) स मानवः श्रद्धां प्राप्नुवन् सत्यं प्रति अग्रसरो भवति । आधुनिकराजनीतिवैज्ञानिका अत्र सहमताः सन्ति यत् राष्ट्रियताया व्याख्यां कर्तुं न शक्यते । तस्या अनुभवमात्रं कर्तुं शक्यते । राष्ट्रियता एकः भावात्मको विचारोऽस्ति तथा सामान्यंहितमादर्शश्च तस्या आधारस्तम्भौ स्तः । राष्ट्रियता एका एतादृशी भावनास्ति, या मानवहृदयस्य अन्तर्भागं स्पृशति ।

सा सामान्यविश्वासः कामना च या मानवान् स्वव्यक्तिगतसीम्नेः

(वैयक्तिकसीम्नेः) सार्वजनीनोदात्ततां प्रति नयति सैव राष्ट्रीयता विचारस्य बीजं कथयितुं शक्यते । वसोर्धाराप्रसङ्गे विनियुक्तमन्त्रेषु उपर्युक्तविचारपद्धतेः समीकरणं (प्रतिपादनं) समुपलब्धमस्ति—

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि ।**
**रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ।।**

(शु०यजु० माध्यन्दिनीसंहिता १८.४८)

श्रीमदुवटाचार्येण मन्त्रस्यास्योपरि स्वभाष्ये विवरणमिदं कृतम्—

**रुचं दीप्तिं नः अस्माकं ये ब्राह्मणास्तेषु धेहि ।**
**रुचं च राजसु नः सम्बन्धिषु कृधि कुरु ।**
**रुचं विश्येषु शूद्रेषु च नः सम्बन्धिषु कृधि कुरु ।**

अत्रेदं ध्येयमस्ति यत् सवम्बन्धिनां समस्तवर्गाणां कृते दीप्तिकामना सामान्यसम्बन्धवतां जनानां सामूहिककल्याणभावना च संपृक्तास्ति ।

**समाप्तश्चायं द्वितीयपरिच्छेदः**

# तृतीयः परिच्छेदः

राष्ट्रियगौरवसंरक्षणोपदेशः ऋग्वेदसंहिताया दशमे मण्डले राष्ट्रसम्बन्धिनीं स्थितिमाश्रित्य प्रतिपादितो यत्—अस्मिताया अभिरक्षितुं राष्ट्रं तदीयं रहस्यञ्च रिपूणां सम्मुखे नैव स्वर्ष्टीभवतीति तद्गोपनीयता रिपुभिः न ज्ञायते[1] । तत्रैव सप्तमे मण्डले राष्ट्रशब्द ईश्वरार्थे शक्तिसम्पन्नैवार्थे प्रयुक्तः । राष्ट्रियास्मिता रक्षणीया तत्र हीनभावो न प्रविशतु इति तत्र निर्दिष्टम्[2] । इन्द्रसदृशो राज्यशासनकर्ता गिरिवत्सुदृढो भूत्वा राष्ट्रं स्वोचितकर्मणि संयोजयेत् इति महत्त्वपूर्णसङ्केतः अस्याः संहिताया एव दशमे मण्डले मिलति । अत्र मन्त्रे प्रजानामेव राष्ट्रतत्त्वं सुस्थितम् ।[3]

अननुभविशासकानां एव राष्ट्रियास्मिताया ह्रासो जायते इति बृहत्संहितायामुक्तं वराहमिहिरेण ।[4]

राष्ट्रियास्मिताया रक्षायै एव शासनकर्तारो राज्यानां शासनं कुर्वन्तीति कथितं वाल्मीकीये रामायणे ।[5]

शासकवर्गः प्रजाकल्याणकर्मव्यापृतो भवेदिति बोधयति महाकविः कालिदासो भरतवचसि अभिज्ञानशाकुन्तलस्य । कालिदाससम्मतं राष्ट्रतत्त्वं—राज्यानां सभ्याः प्रजा राष्ट्रियामस्मितां रक्षितुं प्रभवन्तीति।

---

(१) न दूतायं प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य । (ऋ०सं० १०, १०९, ३)

(२) मा त्वद्राष्ट्रमधि भ्रशत्......। (ऋ०सं० १०, १७३, १)

(३) इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय । (ऋ०सं० १०,१७३, २)

ध्रुवन्ते राजा वरुणो ध्रुवं दिवो बृहस्पतिः । (तत्रैव)

ध्रुवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् । (ऋ०सं० १०, १७३, ५)

(४) कुराजान्तानि राष्ट्राणि......। (बृहत्संहिता १६, १९)

(५) एतदर्थं हि राज्यानि प्रशासति नराधिपाः । (वाल्मीकीय)

लोकमङ्गलकाम: शासनकर्ता आदौ प्रजानां शिक्षा स्यादिति स्वकीयं प्रधानं कर्तव्यमनुभवति । राजा दिलीपो वस्तुत: प्रजानां पिता, देहजनकस्तु जन्ममात्रं ददाति । दिलीपस्तु योग्यशिक्षादानेन प्रजा: सम्मानितवान् । तासां प्रजानां रक्षणभरणपुष्टिभारमपि स्वस्मिन् निहितवान् इति महाकविना स्वकाव्ये रघुवंशे लिखितम् ।[२]

महाकविकालिदास: शिक्षारूपेऽर्थे विनयशब्दं प्रयुक्तवान् । महाकवेर्हृदये विनयगुणसम्पन्ना: प्रजा: एव राष्ट्रस्वरूपमस्ति । तस्माद् विनयशब्द: शिक्षापर्यायत्वेन स्वीकृत: । प्रजानां विनयराहित्येन शिक्षावैफल्यमेव जायते । रघुवंशमहाकाव्यस्य द्वितीयसर्गेऽपि शिक्षार्थे विनयपदं तेन प्रयुक्तम् ।[३] साधुतया विद्याभ्यास: शैशवावस्थायामेव प्रतिफलति[४] । अभ्यासपाटवेन विद्याप्रसादो जायते[५] । अभ्यासार्थे बुद्धिविशदता उषसि भवति[६] । महाकविकालिदासो निशावसाने एव विद्याभ्यासाय समुचितं कालं मन्यते[६] ।

तादृशस्तु कवि: कवितानिर्माणाय शासकानां राज्यसम्बन्धिविविधविषयचिन्तनाय ब्राह्ममुहूर्तं स्वीकरोति इति समनुकूल: काल:[७] । राष्ट्रियास्मिताया: प्रबोधनायोत्तमं सोपानं तावत्समुचितशिक्षादीक्षा तदीयविधिनिर्देशश्च । श्रीहर्षोऽपि स्वनैषधमहाकाव्ये स्वाध्यायोऽर्थ-ज्ञानमाचारादींश्च समाहृत्य शिक्षाया: संगृहीतं स्वरूपं निर्दिष्टवान्[८] ।

(१) प्रवर्ततां प्रकृतिहिताय पार्थिव: । (अभिज्ञानशाकुन्तले)

(२) प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेवत: ॥ (रघुवंशे १. २४)

(३) वन्यान् विनेष्यन्निव दुष्टसत्त्वान् । (रघुवंशे २, ८)

(२) शैशवेऽभ्यस्तविद्यानाम् ..... । (रघुवंशे १, ८)

(४) विद्यामभ्यसनेनैव प्रसादयितुमर्हसि... । (रघुवंशे १, ८८)

(५) पश्चिमाद्द यामिनीयामात्प्रसादमिव चेतना.... । (रघुवंशे १७. १)

(६) तच्छिष्याध्ययने निशां निनाय.... । (रघुवंशे १, ९५)

(७) गहनमवररात्रप्राप्तबुद्धिप्रसादा: कवय इव महीपाश्चिन्तयन्त्यर्थजातम् । (शिशुपालवधे)

(८) अधीतिबोधाचरणप्रचारणै:.... । (नैषधे १, ४)

संस्कृतकाव्यधारायां यत् प्रजायाः सञ्चालनपाटवं सूचितमस्ति तत्तु राष्ट्रानुकूल्यं तत्प्रसादश्चेति गुणद्वयं शासकगुणेषु समाहितं भवेदिति, तेनापि शिक्षायाः संवर्द्धनं भवतीति, एतद्विना राष्ट्रमेकसूत्रेऽनुस्यूतं भवितुं नार्हति । स एव शासकः प्रजाः प्रसादयितुं प्रभवति, यो हि शासकः अतिनिष्ठुरो, नाप्यतिसरलो भवति । तस्यैव दण्डव्यवस्थां कविशिरोमणिः कालिदासो दक्षिणदिग्वायुशीतत्वाद्युपमया अनुरूपिणीं स्वीकरोति[१] ।

प्रजाकल्याणानुरोधेन यथासमयं मृदुकठोरभावं शासकं प्रजाः इच्छन्ति[२] । गुप्तकालस्य संस्कृतकाव्यप्रवाहे प्रजाप्रसादो शासनकर्तुः प्रधानो गुणो अनुभावितः ।

राष्ट्रियास्मितोद्भावेऽयं गुणोऽस्ति यत्—राष्ट्रस्वरूपाय शरीराय मेरुदण्डवन्महत्त्वं सन्धत्ते । अतो महाकविः कालिदासः शासकस्य इमं गुणमनेकधा सूचयति । रघुवंशस्य षष्ठे सर्गे पुनरपि ब्रवीति—प्रजारञ्जनलब्धवर्णत्वं राज्ञाम्[३] ।

विषसदृशं वैषम्यं न कुर्यात् कदापि प्रजाप्रसादं प्रजारञ्जनं कामयमानो राजा । एवं प्रजामनोविजयाय राष्ट्रगौरवप्रबोधनाय च साफल्यमधिगम्यते । प्रजाप्रसादने नृपो रघुः अनुकूलतया साफल्यं प्राप्तवान् । रघो राज्ञः प्रजासु प्रत्येकं जनस्तद्गुणानुरागेण आत्मानं प्रियतमं प्रदर्शितवान् । कालिदासः तत्र समुद्रगाभिः सरिद्भिरुदाहृत्य चित्रमाकृतं सुविशालो गभीरश्च पारावारो निखिलास्तरङ्गिणीः स्वात्मनि

(१) स हि सर्वस्य लोकस्य युक्तदण्डतया मतः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ (रघुवंशे ४, ८)

(२) यथा प्रह्लादनाच्चन्द्रः प्रतापात् तपनो यथा।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ (रघुवंशे ४, १२)

(३) राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा । (६, २१)

सङ्गमयति । न च तत्र तस्य वैषम्यभावना प्रतीयते, तरङ्गिणीं कामपि प्रतीतिः न कस्याश्च नद्याः असम्मानो भवति[१] । शासकगुणानुरोधेन प्रजानां राष्ट्रभक्तिरित्थमस्ति—आश्वस्ताः प्रजाः अतिथिनामकस्य राज्ञोऽग्रे स्वात्मनिवेदनाय प्रभवन्ति स्म । प्रसन्नवदनं सस्मितं भाषमाणं राजानं तस्य प्रजाः मूर्तिमन्तं विश्वासमिव तं स्वीकुर्वन्ति इत्याह कालिदासो रघुवंशे[२]। आदिकविर्वाल्मीकिरपि स्मितपूर्वाभिभाषित्वरूपं गुणं स्वीचकार शासनकर्तृणां सफलतायै । किन्तु निरर्थकानि आश्वासनवचनानि प्रजाश्चिरम् आश्वासयितुं न प्रभवन्ति । कस्मिंश्चिद्दिने सत्यं प्रकाशितं भवत्येव इति शासकवर्गस्येदमवश्यं कर्तव्यं यत्—अयमदीनोऽपि सत्यरक्षकः सन् वाग्वैषम्यं न कुर्यात् । परिहासवार्तासु अपि नृपस्य दशरथस्य मुखादसत्यवचनानि न निःसरन्ति स्म । इन्द्राश्रितत्वेऽपि तद्वचनेषु दीनता न प्रतीयते स्म । रिपुपक्षेऽपि तस्य वाक्पारुष्यं नाभवत्[३] । यथा राजा तथा प्रजाः इत्युक्त्यनुसारेण साधुचरितस्य राज्ञः प्रजाः राष्ट्रस्य राज्ञश्च भक्ताः प्रभवन्ति । "अदीनाः स्याम शरदः शतम्" इति श्रुतेः, "सत्यं ब्रूयात् प्रियं ब्रूयात्" इति स्मृतेश्च वचनानि काव्यदृष्ट्या समुपस्थापयन् महाकविः काव्यचमत्कारं प्रस्तावयन् कर्तव्यप्रकारं निर्दिष्टवान् ।

प्रजामध्ये राष्ट्रस्वाभिमानः परिलक्ष्यते—राज्ञा विपत्तिकाले प्रजारक्षायै एव बलोपयोगः क्रियते न तु स्वप्रयोजनपूर्णतायै, इति चेत्प्रजाजनेषु

(१) अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तनात् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ।। (रघुवंशे ८, ८)

(२) प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम् ।
मूर्तिमन्तममन्यन्त विश्वासमनुजीवनः ।। (१७, ३१)

(३) न कृपणः प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ।। (रघुवंशे ९, ८)

राष्ट्रस्वाभिमान: समुदेति । तत्र इदमपि दर्शनीयं भवति यद्—विशिष्टो राजा विद्वज्जनसम्माननाय स्वविद्याज्ञानोपयोगं विदधाति । न तु स्वाहङ्कारख्यापनाय । राज्ञो धनोपयोग: प्रजाकल्याणाय अस्तु । न तु स्वसुखसम्पादनाय । महाकविकालिदास: एवम्भूतम् अजन्मानं नृपमवर्णयत्[१] । प्रजाशासकमध्ये शिक्षासौविध्यमत्यन्तम् अपेक्षते ।

बाह्याभ्यन्तररिपुभ्यो राष्ट्रसंरक्षणं परमावश्यकम् । राष्ट्रसंरक्षणं द्विधा भवति । (१) राष्ट्रमध्ये प्रच्छन्नरूपेण वर्तमानेभ्य: उपद्रवकारिभ्य: प्रजानां रक्षणम् । (२) राष्ट्रबहिर्भूत-शत्रुभ्यो राष्ट्रस्य संरक्षणञ्चेति । रक्षाया: प्रकारद्वयस्य सम्पादनाय सर्वत: आदौ इदम् अनिवार्यं भवति यत्—प्रजारक्षक: प्रथमं आत्मन: समन्तात् वर्तमानान् शत्रून् निहत्य विजयं प्राप्नुयात् बाह्यरिपवो दविष्ठा: सन्ति । स राजा यदि अन्तरङ्गान् कामक्रोधादिषड्रिपून् जयति, तदा बहिरङ्गशत्रुषु अनायासमेव विजयो जायते । असति अन्तरङ्गशत्रुजये ते राजानं शत्रुरहितं निर्बलञ्च कुर्वन्ति । अत: इमे नित्यवैरिणो जायन्ते । महाकविकालिदास: अजस्य इदमेव वैशिष्ट्यं वर्णितवान्[२] । पाण्डवानुरक्तानां प्रजानाम् अनुरागाय दुर्योधनो निरलसो भूत्वा प्रजासेवासम्पादनाय प्रथममन्तरङ्गं शत्रुषड्वर्गं विजितवान् इति महाकविर्भारवि: किरातार्जुनीये वर्णयामास[३] । राष्ट्रवर्धनं प्रजानुरागश्च यत्—अतिथिप्रह्वेन नृपेण राष्ट्रे अर्थकामौ न तथा संवर्धितौ, यथा ताभ्यां धर्माभिभवो न स्यात् । धर्मेण च

(१) बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥
स्वसुखनिरभिलाष: खिद्यसे लोकहेतो:... ॥ (रघुवंशे ८, ३१)

(२) अनित्या: शत्रवो बाह्या विप्रकृष्टाश्च ते यत: ।
अत: सोभ्यन्तरान् नित्यान् षट्पूर्वमजयद् रिपून् ॥ (रघुवंशे १७, ४५)

(३) कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥

अर्थकामौ न प्रतिवद्धौ । मिथः अर्थेन कामः कामेन वा अर्थो न बाधितोऽभूत् । किन्तु तेन धर्मार्थकामानां त्रयाणां समन्वयः कृतः, तेन च राष्ट्रे सर्वत्र सुखमभूत् शान्तिश्च प्रतिपदम् अन्वभूयत[१] ।

राष्ट्रियास्मितायाः समुद्भवाय विशिष्टं कौशलं कालिदासेन स्वकाव्यनाटकादिषु प्रदर्शितम् । महाकविर्भारविरपि एतत्तत्त्वं प्रकारभेदेन कथयति । दुर्योधनो निष्पक्षं समविभागपूर्वकं धर्मार्थकामान् अनासक्तबुद्ध्या तथा सेवितवान् यथा ते परस्परमविरोधेन उपाश्रिताः; तेन च अन्योन्यं न बाधन्ते स्म[२] ।

एवं राजा राष्ट्रं वर्धयितुं प्रजासु दृढं स्वानुरागं संस्थापयितुं न प्रभवति चेदसौ प्रत्यग्रप्ररूढपादप इव सुखं समुन्मूलयितुं सुकरः शत्रुणा । मालविकाग्निमित्रे महाकविना विशिष्टशैल्या इदं व्याहृतम्[३] ॥

राष्ट्रियस्वाभिमानस्य प्रमुखधाराः सन्ति यत्—
संस्कृतकाव्यधारायां मन्त्रिणामानुकूल्यं मित्राणाञ्च
विश्वसनीयतां प्रति नृपदृष्टिः समाकृष्टा कविवर्येण ।
राष्ट्रियाणां शिक्षारक्षावित्तानां समुत्कर्षः समन्वयश्च
राष्ट्रियस्य स्वाभिमानस्य प्रमुखाधारस्तम्भौ स्तः ।
संस्कृतकाव्यधारायां प्रभुमन्त्रोत्साहशक्तीनां महिमा प्रदर्शितोऽस्ति।

---

(१) न धर्ममर्थकामाभ्यां बवाधे न च तेन तौ ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥ (रघुवंशे १७, ५७)

(२) असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान् न वाधतेऽस्य त्रिगुणः परस्परम् ॥
(किरातार्जुनीये १, ११)

(३) अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ (१, ८)

प्रभुशक्त्या राज्यस्य विस्तारः, मन्त्रशक्त्या च शासनतन्त्रनियमः, उत्साहशक्त्या शासनकार्यं समुत्साहञ्चेति ।

प्रजासु राष्ट्रनिष्ठाजागरणं यत्—संस्कृतकाव्येषु प्रकटितया राष्ट्रियास्मितया प्रेरितस्य जनस्य मनसि स्वराष्ट्रभूमिर्नदनदीतपोवननगरजनसंदोह; सायं प्रातः इतिहाससंस्कृतिसभ्यताः, धर्मराजनीतिसाहित्यदर्शनकलाः अन्यानि च एवम्भूतानि मूलभूततत्त्वानि सन्ति, यैः निष्ठायाः स्वाभिमानस्य च प्रबोधो जायते । अर्वाचीनसंस्कृतकाव्यधारायान्तु राष्ट्रियास्मितायाः समुद्भूताः भासुराः वर्णच्छटाः शोभन्ते । अम्बिकादत्तव्यासरचितशिविराजविजयप्रभृति—संस्कृतकाव्यधारायां कानिचित् काव्यतत्त्वानि केवलं राष्ट्रियास्मितामाश्रित्य निर्मितानि वर्तन्ते। अत्र अर्थशास्त्रवचनं मानदण्डरूपेण स्मर्तव्यम्—

"प्रजाहिते सुखं राज्ञः प्रजानाञ्च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानाञ्च हिते हितम् ॥"

अस्मिन् प्रसङ्गे महाभारतस्य वचनमिदं शिक्षारूपेण मन्तव्यम्—

ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
ते ते राष्ट्रेषु वर्तन्तां मा भूतानामभावकाः ॥

उपर्युक्तनिबन्धे राष्ट्रस्य स्वरूपं विनिर्दिष्टम् । राष्ट्रसंवर्धनाय महाकाव्यधारया कालिदासप्रभृतयः कवयः राष्ट्रोन्नतये राज्ञां प्रजाः प्रति राष्ट्रं प्रति निष्ठा कर्तव्यबोधं निर्दिष्टवन्तः च यथा राजा तथा प्रजाः इति उक्त्या राजमूलिका एव प्रजाः । तस्माद् राष्ट्रहितं कामयमानेन राज्ञा काव्योपदेशाः, श्रुत्युपदेशाः तथाविधाः धर्माश्चावश्यमेव सेवनीयाः। तेन च आत्मनो राष्ट्रस्य प्रजायाश्च अवश्यमेव कल्याणं सम्भाव्यते । तथा चास्य निबन्धस्य समुद्देश्यं राज्ञस्तद्देशवासिनाञ्च कर्तव्यमिदं यतो

हि—प्राचीनपरम्परानुसारेण समाचरन्तश्च राष्ट्रस्य प्रजायाः आत्मनश्च महत्कल्याणं विदद्ध्युरिति ।

राष्ट्रियतायाः सिद्धये भौगोलिकानामुपादानाम् अद्यत्वे या चर्चा क्रियते, विशिष्टसम्वेदनशीलं तत्त्वं वैदिकवाङ्मये स्वोदात्ततया परिगृहीतमस्ति । हिरण्यगर्भसूक्ते[१] मनुष्याणां कृते उपलब्धानां प्राकृतिकविशिष्टतत्त्वानां विषये जिज्ञासा भवति, यतः प्रकृतिगताः शक्तयस्तस्या अनुग्रहेण अस्माभिरुपलब्धाः सन्तीति ।

इमाः शक्तयो निश्चयेन याजकानां स्वराष्ट्रियभूभागं प्रति सङ्केतं कुर्वन्ति । सः समाश्चर्यचकितः सन् पर्वतसमुद्रनदीदिशानम् अनेकदा अनेकत्वबुद्धिं तिरस्कृत्य प्रजापतिविभूतिरूपेण एकात्मतया पश्यति । तथा तत्साहचर्यं सम्प्राप्य कृतकृत्यः सन् अन्यत्र दार्शनिकसूक्तेषु अहोरात्रं मासर्तुसम्वत्सरादिविभेदं कृतज्ञबुद्ध्या सम्मानयति ।

राष्ट्रियतायाः अवधारणायां यज्ञसंस्थायाः विचारो भौगोलिकपरिवेशकल्पानां निर्धारणं कर्तुं साहाय्यं विधत्ते । यजुर्वेदस्य अष्टादशाध्याये वर्णितयज्ञद्वारा पदार्थानां भौगोलिकानाम् उन्मुखीकरणस्य तादात्म्यभावस्य च कामनास्ति । तत्र पाषाणस्य मृत्तिकायाः गिरेः सिकतायाः वनस्पतीनां, खनिजपदार्थानां, व्रीहियवादीनां माषतिलमुद्ग-प्रियङ्गु-श्यामाक-नीवारगोधूमादीनां पदार्थानां प्राप्तये यज्ञप्रसादेन आत्मोन्नत्यै चाकाङ्क्षा अभिव्यक्ता वर्तते । तत्रैव सन्दर्भे भौतिकसुखसाधनवित्तस्यापि महत्त्वं ख्यापितं वर्तते । तत्रैव च मनुष्येषु सत्यस्य श्रद्धायाः, ऋतस्य, पुण्यस्य, अमृतस्य, आनन्दस्य, धैर्यस्य, कल्याणस्य, क्षेमस्य, ज्ञानादेशस्य च लाभाय अत्यधिका कामना लक्ष्यते । सहैव अग्नेरिन्द्रस्य सोमस्य सवितुः सरस्वत्याः पूषणः बृहस्पतेः मित्रस्य

(१) ऋग्वेदः म० १० सू० १२१

वरुणस्य मरुदादेः देववृन्दस्य च दिव्यां शक्तिं प्राप्तुमिच्छति[१] । राष्ट्रियभावनायाः प्रोज्ज्वलमिदं निदर्शनमस्ति यत्—यत्र यज्ञस्य सार्वभौम-सत्तया सह भौगोलिकोपादानस्य मनुष्यस्य अपूर्णतां पूरयितुं या प्राप्तिकामना सा एकात्मभावेन तिष्ठति। अथर्ववेदमन्त्रोऽपि तथ्य-स्यास्य पुष्टिं करोति । तत्र च मानवीया सृष्टिः यज्ञपरिणामतया ख्यापिता[२] ।

ऋषिभिः वैदिकदेवतानां राजरूपतया शाश्वतरूपतया च या स्तुतिः कृता तया राष्ट्रस्य स्थिरत्वकामनया सह राष्ट्रस्य दैवोपलब्धिरपि उद्देश्यतया समाहिताऽस्ति । वैदिकदेवतासु वरुणः, बृहस्पतिः, इन्द्रः अग्निश्च प्राथम्येन परिगणिताः सन्ति । वेदे राष्ट्रधारणप्रार्थनायां राष्ट्रियतासङ्कल्पस्य अभिव्यक्तिर्भवति । तथा च—

**ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।**
**ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ( ऋग्वेदः म० १० सू. १७३ म०५ )**

राष्ट्रभक्तो यो (राष्ट्रधारणभावनावान्) सोऽपि देवगुणसम्पन्नो भवेत् । तदैव राष्ट्रियतायाः अवधारणायां राजप्रजामध्ये सहबोधः सहास्तित्वञ्च अवश्यमेव स्वीकार्यं भविष्यति । वेदे बहुत्र उपदिष्टमिदं यत्—राजा ब्रह्मचर्यं पालयन् तपोवृत्त्यैव राज्यरक्षां कर्तुं प्रभवति ।

यो राष्ट्रभक्तः पुरुषो यस्मिन् राष्ट्रे निवसति स तत्रत्यैः जीवनाधायकैः स्थावरजङ्गमपदार्थैः आत्मानं पोषयन् तत्र जीविकोपार्जनं करोति, स यदि तत्रत्येषु सर्वेष्वपि स्थावरजङ्गमपदार्थेषु, तत्रत्यां संस्कृतौ, परम्परायां, सामाजिकव्यवस्थायां च भृशं अनुरक्तो न भवेत्

(१) शुक्लयजुर्वेदः अः १८ मं. १—२९
(२) अथर्ववेदः का० ११ सू० ७

तथा च तस्य तेषु सर्वेष्वपि भृशं प्रेमा अनुरागो वा न भवेत्तर्हि तस्य मनसि राष्ट्रियभावना कदापि न समुदेति । देशस्य सर्वेष्वपि पदार्थेषु तस्य ममत्वं भवति । दौर्भाग्यात् परराष्ट्रे वसन्नपि तत्र स्वदेशीयान् जनान्, स्वदेशीयान् पदार्थान् वा दृष्ट्वा तैः सह आत्मीयतामनुभवति ।

जीवने पूर्णतानुसन्धानं राष्ट्रियतायाः यात्रा कथ्यते । वैदिकानाम् ऋषीणां कामनाः अनया भावनयैव सम्बद्धाः वर्तन्ते । तेषां दृष्टौ राष्ट्रियता एका निरन्तरप्रक्रियाऽस्ति । राष्ट्रनिर्माणाय दीक्षायाः आवश्यकता भवति । तदैव सामूहिककल्याणस्य संप्राप्तिः सम्भवाऽस्ति । राष्ट्रोदयः—परस्परं सम्मिलनभावना कथ्यते तथा च—

**भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।**
**ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥**

**(अथर्ववेदः का० १९ सू० ४१ मु० १)**

राजसूययज्ञप्रसङ्गे राष्ट्रस्य शासकस्य प्रजाजनस्य च समवेता महनीयता महत्ता वा स्वीकृता वर्तते । अत्र राष्ट्रसम्पत्त्या राजानं संयोजयितुं प्रार्थनाः क्रियन्ते । तदभिप्रायश्च इत्थमस्ति यदयं राजा राष्ट्रस्य समस्तपदार्थान् नियतांशेन भुञ्जीत । अस्य राज्ञः राज्ये मधुरं जलं भवेत्, ऊर्जान्नस्योत्पादनं भवेत्, बलवन्तो युवानश्चसेनानिनो भवेयुः । अस्य राज्ञः राज्यं असपत्नं शत्रुरहितं वा भवेत् । जनपदाय शुभं भवतु । अस्य राज्यं दैवसम्भूतीनां आधायकं भवेदिति तथा च—

**अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः ।**
**याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥**

**(शु० यजुः सं० अ० १० म० १)**

अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ (शु० यजुः सं० अ० १० म० ३)

अस्मिन्नेवाध्याये प्रसङ्गेऽस्मिन् अनेके मन्त्रा राष्ट्रसम्मतिख्यापकाः समाम्नाताः सन्तीति । प्रबन्धविस्तरभिया विरम्यतेऽत्र । विशेषपरिज्ञानाय ते मन्त्राः तत्रानुसन्धेयाः । एतस्य यागस्य मध्ये इदं विधीयते यत् फाल्गुनचतुर्थीतः समारभ्य पूर्णिमां यावत् प्रतिदिनं राजसम्बद्धानां प्रतिनिधिपुरुषाणां गृहे एकैकस्याः इष्टेः अनुष्ठानं सम्पद्येत । एताः इष्टयः रत्नहवींषि इत्याख्यया अभिधीयन्ते । एतासां द्वादशानामिष्टीनां सेनापतेः पुरोहितस्य यजमानस्य महिष्याः अश्वसारथेः ग्रामप्रधानस्य मन्त्रिणो दूतस्य कञ्चुक्याः रथयोजकस्य परिवेशकस्य यूथपतेः पतिपुत्ररहितायाः तस्याः स्त्रियश्च गृहे प्रतिपादनाय विधानमस्ति ।

राष्ट्रस्य प्रारम्भिकस्वरूपस्येदं दृश्यं स्पष्टतः राज्यमण्डलाङ्गानाम् अपि द्योतकमस्ति । राज्यस्य एतेषामङ्गानां विकसितं स्वरूपं याज्ञवल्क्यकौटिल्यादिविचारकाणां[१] ग्रन्थेषु प्राप्यते । अनेन इदमपि ज्ञातुं शक्यते;—यत् राष्ट्रस्य उपलब्धेरनन्तरं राज्ञः प्रजायाश्चास्तित्वं परस्परं पूरकतया भवति । राज्ञो विधिषु प्रजायाः प्रतिनिधीनां

(१) याज्ञवल्क्यस्मृतिः १. ३५३
कौटिल्यार्थशास्त्रे ६. १

महत्त्वमस्ति । सदाचारिणी प्रजा च राजकीयविधीनां सम्पादने प्रवृत्ता भवति । प्रजाप्रशासनयोर्मध्ये राष्ट्रियभावनायाः संस्कारः तयोः आध्यात्मिकमूल्यं प्रकाशयति ।

राजसूयप्रसङ्गे अयं सङ्केतः असङ्गतो न स्यात् । यत्र यजमानराज्ञः कृते सोमप्राशनं निषिध्य वटफलाङ्कुररसग्रहणं विहितमस्ति[१] ।

राज्ञः कृते प्रतीकतया उपात्तोऽयं वटो महत्त्वपूर्णोऽस्ति । यतः वटः एतादृशः वृक्षोऽस्ति—यः एकमूलाश्रितो नास्ति; अपि तु अनेकमूलानां संहतेः आधारस्तम्भोऽस्ति। अनेनायं निष्कर्षः समीचीनतया प्रतीयते यत्—वटः स्वयं अनेकान् आधारीकृत्य एकः वृक्षरूपतया प्रथितो भवति । एवमेव राष्ट्रमपि अनेकव्यष्टीनां समष्टिरस्ति । एषां समस्तसङ्कलनानां प्राणशक्तिः राष्ट्रियताभावनायां निहिताऽस्ति । अश्वमेधो यज्ञो वैदिकयज्ञेषु सर्वोच्चतया गण्यते । अयं यज्ञो राज्ञः सम्राट्पदस्थितिं पोषयति । समवेताभ्युदयस्य कृते इयं राष्ट्रियस्तुतिः । राष्ट्रस्य निवासिनां भौगोलिकसम्पदां पर्यावरणपवित्रतायाश्च संपोषणायेयं स्तुतिर्भवति । अस्य राष्ट्रस्य शासकाः राष्ट्रवासिनश्च स्वे स्वे कर्मणि अग्रण्याः भवेयुः, पशुसम्पदः फलीभूताः विकसिताश्च भवेयुः । यथासमयं पूर्णतया सद्वृष्टिः स्यात्। सदन्नस्य वनस्पतेश्च विकासः स्यात् । गृहिण्यो गुणवत्यः स्युः । अस्माकं योगक्षेमयोः सिद्धिरस्तु इत्येव इमाः अनुभूतीः अथर्ववेदस्य पृथिवीसूक्ते समुदारशब्दावलिभिः अभिव्यञ्जयन् ऋषिः स्वयं भूमिपुत्रो भूत्वा गौरवान्वितो भवति । राष्ट्रनिवासिनां कश्चन निश्चितो विभक्तो वर्गो नास्ति । यस्तु राष्ट्रस्य प्रत्येकनिवासी यः राष्ट्रं प्रति समर्पितोऽस्ति सः राष्ट्रियः, इत्येवं वक्तुं शक्यते । राष्ट्रस्य सम्पूर्णतापि अत्रैव निहिताऽस्ति । समस्तवर्गाणां समुचितं प्राधान्यमस्तु । शुक्लयजुर्वेदस्य त्रिंशाध्याये राष्ट्रियतायाः

(१) कातीयश्रौतसूत्रे १०.९.२८

तादृशं स्वरूपं दृष्टिगतं भवति, यत्र भेदभावनां परित्यज्य राष्ट्रनिवासिना एकत्र सूत्रे समुपस्थितिः परिकल्पिता भवति । प्रसङ्गोऽयं विभिन्नजातीनां वर्गाणां कर्मकाराणाञ्च पृथक् परिगणनं करोति । कतिपयसन्दर्भाः एवंविधाः सन्ति, यैः परिगणिताः निम्नलिखिताः वर्गाः दृश्यन्ते— धनस्य विभाजनकर्ता, यज्ञसम्पादको ब्राह्मणः । क्षात्रतेजःसम्पन्नो रक्षकः क्षत्रियः । वाणिज्यार्थं धनार्जको वैश्यः। तस्करः, कदर्यः, नपुंसकः, लौहकारः, सूतः (सारथिः), शैलूषः सभासद्, वाचाटः, विदूषकः, रथकारः, सूत्रधारः, कुलालः, मण्यादिज्ञानवान्, कृषकः, आयुधप्रणेता, व्याधः, निषादः द्यूतक्रीडकः, वंशस्फोटकः, वेश्या, विकलाङ्गः, वैद्यः, ज्योतिषी, हस्तीपकः, गोपालः, अजादिपालकः, द्वारपालः, महाजनः, काष्ठविक्रेता, पाचकः, मूर्तिकारः, मालाकारः, रजकः रङ्गकारः, स्त्री, रक्षकः, सेवकः वन्ध्या, वृद्धा, चर्मकारः, भिल्लः, किरातः, किन्नरः, स्वर्णकारः, धीवरः धूर्तः, भिक्षुकः, बहुभार्षा, वनपालकः, ग्राममुख्यः, नर्तकः इत्यादयः । तथैव च मन्त्रः—

**ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीवमाक्रयाया अयोगूं कामाय पुंश्चलूमतिक्रुष्टाय मागधम् ॥ नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो मैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाऽप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥**

(शु० यजुः सं० अ० ३० म० ५–८)

अनेन प्रकारेण इदं स्वीकरणीयं यत्—वैदिकदेवर्षिः राष्ट्रं, राष्ट्रस्य समस्तनिवासिनश्च प्रति निरन्तरं जागरुकोऽस्ति । राष्ट्रियता मनुष्याणां धर्मः । तथा ते अस्मिन् पुरुषमेधात्मके राष्ट्रे उपस्थिताः सन्ति, यत्र तेषां समीकरणं देवैः समुपस्थापितमस्ति । राष्ट्रियतानिर्धारणाय आवश्यकतत्त्वेषु भाषा अन्यतमाऽस्ति । संसारस्य इदमेकम् आश्चर्यमस्ति यत्—वैदिकभाषा अनादिकालतः स्वमूलरूपेण अपरिवर्तनीया सुरक्षिता चास्ति । तात्कालिकसमाजः इमां देवभाषां व्यवहरति स्म ।

यज्ञविधानेषु अनया देवभाषया विधीनां सम्पादनाय शास्त्रादेशोऽस्ति । वाक्सूक्ते राष्ट्रस्य अस्मितावाणीज्यायता एवास्ति । वाणी एव राष्ट्रियसम्पदं परिवर्धयितुम् अधिष्ठात्री देवी वर्तते[1] । श्रुतिः असकृत् इदं निर्दिशति यत्—यज्ञव्यवहारे मानुषी भाषा न प्रयोक्तव्या। यतः तत्प्रयोगेण यज्ञो लुप्तो भवति[2] । वर्तमानसन्दर्भे भाषाविस्मरणं राष्ट्रियताम् अपहन्ति। वैदिकसंहितासु या प्रार्थनाः वर्तन्ते तासु राष्ट्रभक्तेः प्राधान्येन प्रतिपादनमस्ति । फलार्थिभिर्मानवैः एतासु स्तुतिषु देवाः संबोधिताः सन्ति । येषु राष्ट्रियसम्पत्तीनां राष्ट्रभक्तानां सद्विचारः सर्वेषां च कल्याणकामनाऽस्ति ।

**निर्मीया उ त्ये असुरा अभूवन् त्वं च मा वरु कामयासो ।**

**ऋतेन राजन्ननृतं विविञ्चन मम राष्ट्रस्याधिपत्यमेहि ॥**

(ऋग्वेदः १०।१२४)

अस्यायमभिप्रायः—हे राजन् ! ऋतात् अनृतं विवेचयन् त्वं मम राष्ट्रस्य अधिपतिर्भव। ऋतानृते विविच्य समालोचयन् (संपश्यन्) राजा राष्ट्रस्य अलङ्कारो भवति। वाजपेयराजसूययोर्यज्ञयोः यज्ञसम्पादकाना

(१) ऋग्वेदः १०.१२५ वाक्सूक्तम्

(२) शातपथम् ३.४.१.३५; १.५.२.१५

पुरोहितानाम् इयमेव कामनाऽस्ति, यत् वयं मधुमतीभिः ओषधीभिः जलैश्च अभिषिक्ताः सन्तः स्वराष्ट्रे जागरुकाः स्याम । यतः अनवधानता राष्ट्रस्य अस्मितां विखण्डयितुं शक्नोति, तथा राष्ट्रियतां सङ्कुचितां कर्तुं प्रभवति। तथा च—

**वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु ।**

**ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा[1] ॥**

**( शु० यजुर्वेदः )**

वैदिकवाङ्मये राष्ट्रियतायाः इयमवधारणा वर्तमानकालं यावत् अक्षुण्णाऽस्ति । भारतीयतायाः संस्काराः देशस्योपरि समागतासु प्रतिकूलपरिस्थितिषु एतादृशं बलं प्रदत्तवन्तः, येन तस्याः मूलरूपं यथापूर्वं सुरक्षितमस्ति । अत्रायं प्रश्नः समुपस्थितो भवितुमर्हति यतः—

वैदिकयुगे राजसूयादिसंस्कृताः राज्यव्यवस्थाः अनेकाः सन्ति । ताः सर्वाः पृथक् पृथक् राष्ट्ररूपेण विभक्ताः अभवन् तथा तासां राष्ट्रियतायाः मानदण्डः पृथक् पृथक् अभवत् । अस्योत्तरं निषेधात्मकमस्ति। वैदिकराष्ट्रे अनेके देशाः अभवन्, यथा अस्मिन् समये प्रान्तभेदाः सन्ति । परन्तु तस्मिन् समये राष्ट्रमेकमेव आसीत् । राष्ट्रियताऽपि एकविधैव अभवत् । अन्यथा चितिचयनप्रसङ्गे इयं भावना व्यक्ता न स्यात् । द्यावापृथिव्योः मध्ये यत्रापि अन्व्रतयजमानद्वारा अग्निचयनं क्रियमाणं स्यात् । ते सर्वे अग्नयः मया सम्पादिते अस्मिन् कर्मणि

(१) शुक्लयजुर्वेदः

समाश्रिताः स्युः । सहैव संहितासु, अव्रताः अयज्वानः इत्यादिप्रयोगाः सूचयन्ति यत् कानिचित् अराष्ट्रियतत्त्वानि तस्मिन् समयेऽपि उपस्थितानि आसन् यानि वैदिकराष्ट्रियतायाः मूल्यानि न स्वीकुर्वन्ति स्म । पृथिव्यां दिग् देशकालेन परिमिते क्षेत्रे सर्वतोभावने अभ्युदयाय राजन्ते शोभन्ते यत्र जनास्तद् राष्ट्रम् । सर्वेषां जनानां जीवनसाफल्यं राति ददाति यत् तद् राष्ट्रम् । अथवा "राजृ दीप्तौ" धातो राजते इति राट् । क्विपि[१] जाते पुनश्च "रा" इति शब्दात् ष्ट्रनि प्रत्यये जाते अनुबन्धादिलोपे राष्ट्रम् इति स्वरूपं सिद्ध्यति । अत्र कुल्लूकभट्टः कथयति— राष्ट्रः देशः मेधातिथिर्ब्रवीति—राष्ट्रं जनपदाः । (मनुः ९.२९४ टीका) "राष्ट्राणि नगराणि च" । (वाल्मीकिरामायणे)

"राज्यश्यालस्तु राष्ट्रियः" (अमरकोषे)

अत्र राजते द्योतते अनेन देशेन इति राष्ट्रम् । राजते शोभते अनया स्वामिन्या इति राष्ट्री । अत्र उभयत्र ष्ट्रन्निति योगविधानेन करणे ष्ट्रन् प्रत्ययोऽभूत् ।

**।। समाप्तश्चायं तृतीयपरिच्छेदः ।।**

---

(१) अन्येभ्योऽपि दृश्यते ।

# चतुर्थः परिच्छेदः

"विद्ज्ञाने" "विद् सत्तायाम्" "विद् विचारणे" "विद् चेतनाख्यानेनिवासेषु" प्रभृतिभ्यः धातुभ्यः घञ् प्रत्यये कृते वेद शब्दो निष्पद्यते। समग्रवैदिकवाङ्मये वेदशब्दः द्विविधरूपेण प्रयुक्तो वर्तते । एकः आद्युदात्तः, द्वितीयश्च अन्तोदात्तः । आद्युदात्तः वेदशब्दः ज्ञानार्थकः । अन्तोदात्तः वेदशब्दः (कुश मुष्टिवाचकः) धनार्थकः अस्ति । ज्ञानसत्ताविचारलाभार्थ-कविद्धातोः निष्पन्नः वेदशब्दः ईश्वरीयज्ञानार्थ-कोऽस्ति । "वेदोऽखिलो धर्ममूलम्[१]" इति समुद्घोषयन् भगवान् मनुः वेदं सर्वज्ञानमयम् अभिहितवान् । एवमेव तत्रैव "सर्वज्ञानमयो हि सः[२]" सर्वज्ञानमयः ईश्वरः एव । यः ईश्वरः सः एव वेदः । वस्तुतः वेदो विश्वस्य प्राचीनतमं साहित्यमस्ति । तत्र राष्ट्रं राष्ट्रियभावश्च प्रचुरतया उपलभ्यते । दीप्त्यर्थकशासनार्थकराज्धातोः औणादिके ष्ट्रणि प्रत्यये कृते सति निष्पन्नः राष्ट्रशब्दः ऋग्वेदे राज्यार्थे साम्राज्यार्थे वा प्रयुक्तोऽस्ति । यजुर्वेदाथर्ववेदब्राह्मणारण्यकग्रन्थेषु अपि राष्ट्रशब्दः राज्यार्थे अथवा साम्राज्यार्थे प्रयुक्तो भवति । उपनिषदि राष्ट्रशब्दस्य स्थाने राज्यशब्दस्य प्रयोगो मिलति । अनेन इत्थं प्रतीयते यत्— उपनिषदि राष्ट्रराज्यशब्दौ पर्यायौ आस्ताम् । समग्रवैदिकवाङ्मये न केवलं राष्ट्रीयः, राष्ट्राणि, राष्ट्रेण, राष्ट्राय, राष्ट्रात्, राष्ट्रस्य, राष्ट्राणाम्, राष्ट्रे इत्यादिविभक्त्यन्ततया एव प्रयुक्तः, अपि तु राष्ट्राणाम्, राष्ट्रदा, राष्ट्रदीप्सु, राष्ट्रभृत्, राष्ट्रभृत्याय, राष्ट्री राष्ट्रियम् इत्यादि पदैरपि प्रयुक्तोऽस्ति ।

---

(१) मनुस्मृतौ २/६

(२) यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।। (मनुः २.७)

शुक्लयजुर्वेदे प्रयुक्तं राष्ट्रदापदं[१] जलार्थे अभिप्रेतमस्ति । जलार्थे प्रयुक्तमिदं विशेषणं राष्ट्रस्य समृद्धर्थे सङ्गतार्थं भवति । राष्ट्रसम्बद्ध-शब्दभिन्नतया भौज्य[२]स्वराज्य[३]वैराज्य[४]साम्राज्यशब्दाः वेदकालिकराज्य-पद्धतीनां परिचायकाः सन्ति । वैदिकवाङ्मये समुपलब्धा राजा सम्राट् एकराट् इत्यादिशब्दाः राष्ट्राध्यक्षाणां शासकानाञ्च बोधकाः सन्ति । तैत्तिरीयसंहितायामयं मन्त्रः मिलति;—

**"राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति"**

**(का० ७ प्र० ४ अनु० ८)**

अस्यायमर्थः प्रजा राष्ट्रमस्ति, पशुः राष्ट्रमस्ति, यत्किमपि श्रेष्ठं तदपि राष्ट्रमस्ति । अस्मिन् वाक्ये प्रजा राष्ट्रमस्ति इति कथनमस्य अभिप्रायस्य परिचायकमस्ति । प्रजया एव राज्यस्य राज्यं, देशस्य च दीप्तिरस्ति । तथाच—

**"राष्ट्रं वै पर्णो विडश्वत्थो यत् पर्णमयी जुहूर्भवति"**

**(तैत्तिरीय संहिता ३.५.७.२)**

राष्ट्रं पर्णमस्ति, प्रजा च अश्वत्थोऽस्ति । तैत्तिरीयसंहितायाः वाक्यमिदं तथ्यमिदं रेखाङ्कितं करोति यत्—यथा पर्ण ब्रह्माश्रयं भवति तथैव राष्ट्रं प्रजाश्रयं भवति ।

**"राष्ट्रं वै वैश्वानरो विण्मस्तः" (तै० संहिता ३.५.७.२)**

विट्=प्रजा, राष्ट्रं वैश्वानरः अग्निरस्ति, प्रजा मरुदस्ति । तैत्तिरीयसंहितायाः कथनमिदं स्पष्टयति यत् यथा वायुः अग्निप्रज्ज्वलने

(१) शुक्लयजुर्वेदः १०.३.४
(२) ऐतरेयब्राह्मणम् ८.१२
(३) ऐतरेयब्राह्मणम् ८.१२ तैत्तिरीयब्राह्मणेऽपि १.३.२२
(४) तत्रैव ऐतरेये

सहयोगी भवति, तथैव प्रजाराष्ट्रोत्कर्षे मूलहेतुरस्ति । वैदिकवाङ्मये प्रजापशुजलादीनां राष्ट्रतया अभिधानस्य नायमर्थः यत् वैदिकर्षीणाम् एतेषु एव पदार्थेषु राष्ट्रत्वकल्पना आसीत् । तेषां राष्ट्रविषयिणी अवधारणा कस्मिंश्चित् एकस्मिन् देशविशेषे नास्ति, परन्तु एकस्य आदर्शराष्ट्रस्य प्रतिरूपा आसीत् ।

आक्स्फोर्डडिक्सनरी—नामाभिधायककोशस्य परिभाषां ध्यात्वा यदाहं वैदिकराष्ट्र-स्वरूपविषये विचारयामि तदा इदं स्मृतिपथमायाति यत् इयं परिभाषापि वैदिकराष्ट्रस्वरूपकल्पा भवति । ऐतरेयब्राह्मणानुसारेण राष्ट्रगोपः[१] तस्य पुरोहितस्योपाधिरस्ति, यः स्वाभिचाराणां संस्काराणाञ्च भक्तिभिः राष्ट्रस्य राज्ञश्च रक्षको भवति । पुरोहितः देवतानां प्रार्थनां कृत्वा राज्ञः युद्धे विजयाय सहयोगप्रदानं करोति स्म । ऋग्वेदे दाशरातयुद्धावसरे राज्ञा सुदासेन सह तस्य पुरोहितस्य वसिष्ठस्य एवं रूपेण एव वर्णनं कृतमस्ति[२] यदा सम्राजः उपरि अभिषेकावसरे राजपुरोहितः राष्ट्रनायकस्य राष्ट्रियाधिकाराणां कर्तव्यानाञ्च स्मरणं कारयन् तस्य संरक्षणे राष्ट्रं समर्पितं करोति स्म । तथा च—

**"इयं ते राट् यन्तासि यमनो ध्रुवोऽसि धरुणः**
**कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ।।"**

(शतपथब्राह्मणम् ५.२.१.२२)

अस्यायमर्थः—इदं राष्ट्रं तवाधिकारे समर्पयामि, त्वमस्य राष्ट्रस्य नियामकोऽसि । त्वं दृढः सन् राष्ट्रस्योत्तरदायित्वनिर्वाहाय, कृषिकल्याणाय, समृद्धये, पुष्ट्यै च तुभ्यं राष्ट्रमिदं प्रदत्तमस्ति ।

राजपुरोहितस्यानेन कथनेन (अपरस्य एकस्य) अपरस्यापि

(१) ऐतरेयब्राह्मणम् ८.१२
(२) ऋग्वेदः ७.३८.४

एकस्य वैदिकराष्ट्राध्यक्षस्य कर्तव्यस्य च बोधो भवति । तेन वैदिकर्षीणां राष्ट्रविषयिणी उदात्तधारणापि दृष्टिगोचरा भवति। राष्ट्रं दैवी सम्पत्तिरेव न, अपि तु मानवीया सृष्टिरस्ति । राष्ट्रं भोग्यं नास्ति, अपि तु संरक्ष्यमस्ति । तथा च—

**ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।**
**ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥**
**आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ।**
**विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥**
**इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।**
**इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥**

(ऋग्वेदः म० १०, सू० १७३)

ऋग्वेदस्य उक्तासु ऋक्षु समग्रं विश्वमात्रं राष्ट्रमस्ति देशविशेषसङ्कीर्णा सीमा राष्ट्रं नोच्यते । तामेव व्यक्तिं राष्ट्रराजरूपेण विधातुम् अनुमतिं ददाति, या समग्रप्रजायाः प्रियाऽस्ति । एवंविधः सार्वभौमः सम्राट् निश्चयेन राष्ट्रस्योत्कर्षं विदधाति ।

अथर्ववेदे राष्ट्रिया अवधारणा अनेकत्र दृष्टिगोचरा भवति । अत्र मानवसमाजस्य कृते एकस्य आदर्शरूपस्य बृहद्राष्ट्रस्य प्रार्थना कृता अस्ति ।

**"अथास्मभ्यं वरुणो वायुरग्निर्बृहद्राष्ट्रं संवेश्यऽ दधातु"**

**(अथर्ववेदः ३.८.१)**

ऋषयः स्वस्य मनोनीतस्य राष्ट्राध्यक्षस्य मस्तकोपरि राष्ट्रतिलकं विधाय राष्ट्रोत्कर्षस्य कृते हार्दिकीं कामनां कुर्वन्ति स्म । राष्ट्रस्य

समृद्धये ते ऋषयः यज्ञद्वारा देवार्चनं कुर्वन्ति स्म । ऋषयः मनोनीताय राष्ट्राध्यक्षाय उपदिशन्ति स्म—यत् स राष्ट्राध्यक्षः सर्वथा राष्ट्रस्य सुरक्षां करोतु । तथा सर्वेषां प्रजाजनानां पालनपोषणं कुर्वन् एकराट् भूत्वा सुशोभितः स्यात् । यतः रञ्जनेनैव राज्यस्य स्थिरता सम्भवति ।

**"स नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः स्याम" । ( अथर्ववेदः ६.३९.२ )**

**"आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट् त्वं वि राज"। ( अथर्ववेदः ३.४.१ )**

ऋषयः राष्ट्रमक्षुण्णं विधातुं राष्ट्राध्यक्षस्य सीमान्तराजभिः सह घनिष्ठं सम्बन्धं संस्थापयितुं तं राष्ट्राध्यक्षं प्रेरयन्ते स्म । स्वमातृभूम्या सह भावनात्मकं सम्बन्धं संयोज्य ऋषयः राष्ट्रं प्रति प्रेमभावनाम् प्रकटयन्ति स्म ।

**यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते ।**
**प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ॥**
**( अथर्ववेदः १२.१.४३ )**

क्षेत्रऋषयः विश्वसन्ति स्म यत् मम मातृभूमेः नगराणि देवैः निर्मितानि सन्तीति । मातृभूमिं प्रति प्रेमप्रकटयितुं सर्वोत्कृष्टसुन्दरमुदाहरणमस्ति ।

निष्कर्षतः एतद् वक्तुं शक्यते यत् वेदेषु राष्ट्रस्य राष्ट्रियतायाः राष्ट्रियैकतायाश्च यद्विवेचनं मिलति तदनुपमम् अद्वितीयञ्चास्ति । तस्य महत्त्वातिशयो वर्तते । अद्यत्वे विषाक्तवातावरणे समाजव्यवहारे यदि वेदनिगूढराष्ट्रियतत्त्वानां समाजं प्रति अवबोधनं भवेत् तदा राष्ट्रोत्कर्षेण सहैव समाजोऽपि संस्कारक्षमो भवितुं शक्ष्यति । अस्मद्भाविनः

सामाजिकाः अपि निश्चयेन राष्ट्रभक्ताः भविष्यन्तीति नास्ति शङ्कालेशः। यतो वेदे एव ज्ञानविज्ञानानां मौलिकं स्वरूपं निहितमस्ति । तत्र राष्ट्रचिन्तनस्यापि तात्त्विकं विवेचनं व्यावहारिकञ्च वैज्ञानिकं स्वरूपं च समुपलभ्यते । तत्र च राष्ट्रचिन्तनस्य बहुविधं निदर्शनं मन्त्रब्राह्मणादि ग्रन्थेषु उपलभ्यते । वैदिकं राष्ट्रियस्वरूपं तु ईश्वरीयं विद्यते । तस्यैव साम्प्रतं यत्किञ्चित् पौरुषं स्वरूपं पुरुषसामर्थ्यदिशा निश्चीयते ।

आधुनिके राष्ट्रिये स्वरूपे च मनुष्यस्य आधिभौतिकं स्वार्थजातमेव प्राधान्येन राष्ट्रस्य विस्तराय समृद्धये चाधारीभूतं भवति । एतेन तेषां राष्ट्राणां मध्ये यत्र तत्र विवादः कलहः क्लेशः सुखशांत्यादेरभावश्च प्रायेण परीदृश्यते । वैदिकं राष्ट्रियस्वरूपम्—आधिभौतिकाधिदैविकदिशा च पुरुषार्थचतुष्टयप्राप्तये परिकल्पितं अस्ति ।

एतावता वैदिकं राष्ट्रियं स्वरूपमेव समेषामपि जनानां समानरूपेण अभ्युदयाय सुखशान्तिभावाय च कल्पते, इति वक्तुं शक्यते । वैदिकं राष्ट्रं विश्वस्मिन् जगति प्राचीनतमं प्रामाणिकं वैज्ञानिकं सार्वकालिकञ्च इति समेषामपि पूर्वपाश्चात्त्यविदुषां मतम् ।

**।। समाप्तश्चायं चतुर्थपरिच्छेदः ।।**

# पञ्चमः परिच्छेदः

विश्वप्रथितो महिमा खलु भगवतो वेदस्य । प्राचीनतमो भगवान् वेदो विराजते वैश्विके वाङ्मये । ज्ञानविज्ञानपरिपूर्णो वेदनिधी रक्षित आस्ते अनादिकालात् । तत्रैव वैदिके संस्कृतवाङ्मये च ऐहिकामुष्मिकक्रियाकलापानां मानवमूल्यानाञ्च महत्त्वपूर्णं प्रकटनमस्ति। सत्यमिदमस्ति यत् मानवमूल्यानां रक्षणेनैव राष्ट्रियैकतायाः सम्भावना भवति । भारतीयसंस्कृतेः तद्धर्मस्य तद्दर्शनस्य संपोषका आश्रयभूताश्च वेदा एव सन्ति । धर्मकर्मादिकर्तव्यविधि-निर्धारणाय वेदानामेव प्रामाण्यमस्ति । तथा चोक्तं—

**"धर्मं जिज्ञासमानां प्रमाणं परमं श्रुतिः" ।।**

वेदविज्ञानशून्यानाम् । अनेकेषाम् इदं कथनमस्ति यत् राष्ट्रियभावना न पूर्वमासीत् । परन्तु आङ्गलशासनसम्बन्धेन समुद्भूता अभवत् । वस्तुतः कथनं भ्रममूलकमेव । यतो हि—किन्नामाङ्गलशासनादपितु अनादिकालादेव वैदिकवाङ्मये राष्ट्रस्य राष्ट्रियभावनायाश्च साङ्गोपाङ्गतया या परिकल्पना अनुभूयते तस्याः स्वरूपं तु विश्वसाहित्येऽपि सुदुर्लभमस्ति । वैदिकवाङ्मये अनेकशः राष्ट्रशब्दः समाम्नातोऽस्ति । एतत्तु पूर्वस्मिन् परिच्छेदे व्यधायि—राष्ट्रेण राष्ट्रात् राष्ट्रस्य राष्ट्राय इत्येवं तत्तद् विभक्तिषु शब्दाः उद्धृताः सन्ति । एतेषां शब्दानां प्रयोगेणैव प्रतीतमिदं भवति यत् तदानीमुपयुक्ताः शब्दाः कस्मिंश्चिदर्थे प्रयोज्यमानाः स्वार्थं बोधयन्ति स्म। ते शब्दाः प्रयुज्यमानाः सन्तः इदं प्रत्यायन्ति यत्तदानीमपि राष्ट्रम् आसीत् समाजः आसीत्। तत्र सामाजिकानां राष्ट्रियता परिकल्पिता आसीत् । प्रजयैव राष्ट्रस्य श्रेष्ठत्वं

प्रतिपादितम् । तथा च—

"उत्तरं राष्ट्रं प्रजया" । (अथर्ववेदः १२.३.१०)

अनेन इदं स्पष्टीभवति यत् यस्मिन् काले वैदिकर्षयः प्रजामेव राष्ट्ररूपां स्थापयन्ति स्म तदैव राष्ट्रशब्दः दीप्त्यर्थवाची सिद्ध्यति । विशिष्टसंस्कृतिसम्पन्नोऽयं दीप्तिशब्दः । यस्यां दीप्तौ तादृशभूभागस्य जनतायाः समाजसम्बन्धिगर्भं जीवनञ्च सन्निहितं भवति । आङ्गलवाण्यां राष्ट्रशब्दस्य अभिधेयोऽर्थः जातिः, प्रजा,राज्यस्य,निवासिनो वा भवन्ति । उपर्युक्ता परिभाषा वैदिकराष्ट्रपरिभाषामेव अनुगच्छति । मनुस्मृतौ राज्यपरिकल्पनाविषये इदमुक्तम्—

**स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।**
**सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ।।**

(मनुस्मृतौ अ० ९ पद्यम् २९४)

एवमेव कामन्दकीयेऽवलोक्यते—

**"साम्यमात्यश्च राष्ट्रञ्च दुर्गं कोशो बलं सुहृत् ।**
**परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते" ।।**

कौटिल्यमतेन यदि चेत् सप्तप्रकृतयः निष्ठापूर्वकं स्वकर्तव्यं निर्वहन्ति तदानीम् एताः राजसम्पत्तयः जायन्ते । तद्यथा—

**अखिर्याः प्रकृतयः सप्तैताः स्वगुणोदयाः ।**
**उक्ताः प्रत्यङ्गभूतास्ताः प्रकृता राजसम्पदः ।।**

अद्यत्वे तावत् राज्यस्य चत्वारि तत्त्वानि मन्यन्ते—

(१) जनसंङ्ख्या (२) निश्चितो भूभागः (३) शासनम् (४) संप्रभुता च । प्राक्तना अवधारणा अद्यभवाया अवधारणाया व्यापिका

ऋग्वेदे भरतस्य प्रसङ्गो मिलति, विश्वामित्रः भरतेन साकं विपाट् शुतुद्रीसरित्सङ्गमम् उत्ततार । भरतस्य सम्पर्कः तृत्सुना नृपेण सुदासेन आसीत् । तृत्सुभरतोऽयं कालान्तरे कुरुपाञ्चालाभिधानेन प्रसिद्धिम् अगमत् । तद्यथा—

**"अग्निरगामि भारतः वृत्रहा पुरुचेतनः ।**
**दिवोदासस्य सत्पतिः ।।"** (ऋग्वेदः ३.५३.१२)

पुराणेऽपि लक्ष्यते—

**जम्बुद्वीपेश्वरात् पुत्रा ह्यग्नीध्रादभवन् नव।**
**नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः।।**
**रम्यो हिरन्वान् षष्ठश्च कुरुर्भद्राश्व एव च।**
**केतुमालो नृपस्तेभ्यस्तत्संज्ञान् खण्डकान् ददौ।**
**नाभेस्तु मेरुदेवास्तु पुत्रोऽभूदृषभो हरः ।**
**तत्पुत्रो भरतो नाम शालग्रामे स्थितो व्रती ।**
**सुमतिर्भरतस्याभूत् तत्पुत्रस्तेजसोऽभवत् ।**
**इन्द्रद्युम्नश्च तत्पुत्रः परमेष्ठी ततः स्मृतः ।**
**प्रतीहारश्च तत्पुत्रः प्रतिहर्ता तदात्मजः ।**
**सुतस्तस्मादथो जातः प्रस्तारस्तत्सुतो विभुः।**
**पृथुश्च तत्सुतो नक्तो नक्तस्यापि पयः स्मृतः।।**
**नरो त्रयस्य तनयस्तत्पुत्रो बुद्धिराट् ततः ।**
**ततो धीमान् महातेजा भौवनस्तस्य चात्मजः।।**

**त्वष्टा त्वष्टुश्च विरजा रजास्तस्याप्यभूत्सुतः।**
**शतजिद्रजसस्तस्य विश्वग् ज्योतिः सुतः स्मृतः।।**

(गरुडपुराणे—अ० ५४ ... ११—१७)

अनेन इदं निश्चीयते यद् वेदानुयायिनः आर्या यत्र भूभागे निवसन्ति स्म तद्भारतमेव भवति । वैदिकवाङ्मये राष्ट्रविषये यच्चिन्तनं यच्च स्पन्दनं तत्र भारतराष्ट्रम् आधारी-कृत्यैवास्ति ।

पूर्वोत्तरवैदिककाले अविभक्तं समग्रं राष्ट्रम् अनेकेषु राज्येषु विभक्तम् आसीत्, किन्तु राष्ट्रपदेन तत् अखण्डमेव आसीत् । निखिलेऽपि राष्ट्रे समाना संस्कृतिः समाना राष्ट्रभाषा आसीत् । प्रत्येकं राष्ट्रस्य आधारः कश्चन भूभागो भवति स्म । तादृशः भूखण्डमात्रं राष्ट्रपदेनाभिधीयते । तस्मिन् यादृश्याः संस्कृतेः समुत्कर्षो भवति, तस्याः महत्त्वं भूखण्डात् समधिकं भवति । संस्कृत्यभावे तद्भूभागमात्रम् उच्यते, किन्तु राष्ट्रं नोच्यते । संस्कृत्यवसाने राष्ट्रेण सार्द्धं राष्ट्रभाषापि विलुप्ता भवति । वैदिकर्षिः राष्ट्रशब्दं प्रयुञ्जानः इदम् अनुभावयति यत्—एको विशिष्टो भूखण्डः । तत्र च विकसिता समाना संस्कृतिर्भवति । तस्याः सञ्चालिका विशिष्टा एका राष्ट्रभाषा भवति । राष्ट्रस्वरूपसम्पत्तौ विशिष्टस्य भूभागस्य संस्कृतेर्भाषायाश्च परस्परं संघटनम् । वैदिकर्षिः एतत् त्रितयं क्रमशः इडा, भारती, सरस्वतीति रूपेण व्यनक्ति प्रकटयतीत्यर्थः । एतत् त्रितयं क्रमेण राष्ट्रभूमेः राष्ट्रसंस्कृतेः राष्ट्रभाषायाश्च प्रतीकभूतमस्ति । यज्ञवेदिषु विस्तीर्णेषु कुशेषु ऋषिर्यदा ईडाया भारत्याः सरस्वत्याश्च एतानि त्रीणि मूलतत्त्वानि वेदिरूपे राष्ट्रे सुप्रतिष्ठितानि करोति । ऋग्वेदे १०.१२.४ प्रयुज्यमानो राष्ट्रशब्दो यज्ञवेदिपरः, इति सुप्रसिद्धवेदभाष्यकारः सायणाचार्यः

स्वींकरोति । तत्रैव ऋग्वेदे इडादीनां चर्चा लक्ष्यते—

**सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ।**
**तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥**

**(ऋग्वेदः २.३.८)**

राष्ट्रियता नागरिकता च मिथो भिन्ने स्तः । यत्र क्वचिदपि देशे निश्चितकालं यावत् वासेन कश्चित् मनुष्यः तत्रत्यः नागरिकः भवति, तत्र च मतदानादिकर्मणि अधिकृतश्च भवति, तदानीं स नागरिकः प्रोच्यते । परन्तु राष्ट्रियता ततो भिन्नाऽस्ति । यतः राष्ट्रं न हि भूभागशास्त्रं भवति । किन्तु तत्र विकसिता संस्कृतिः भाषा च राष्ट्रपदे न प्रोच्यते । अतः यत्र अस्माकं निवासः तद्राष्ट्रस्य मृत्तिका, पर्वतः, सरितः, वृक्षाः, पशुः, जलं, वायुः इत्याद्याः पदार्थाः, तत्रत्या परम्परा, रीतिर्जनाः इत्यादयः स्थावरजङ्गमपदार्था ये राष्ट्रान्तःपातिनो भवन्ति, ते सर्वेऽपि राष्ट्रपदवाच्या भवन्ति । राष्ट्रन्तःपातिनं प्रतिपदार्थं प्रति राष्ट्रियजनस्य भृशमनुरागो ममत्वं आत्मीयता च भवति । जीविकावशात् अथवा कस्मैचित् प्रयोजनाय राष्ट्राद्बहिर्गतो राष्ट्रान्तरस्थोऽपि जनो राष्ट्रियं स्थावरजङ्गमं कमपि पदार्थं दृष्ट्वा प्रसन्नो भवति सहजभावेन तम्प्रति प्रस्फुरति । अत्यन्तमनुरागः आत्मीयत्वं तदुत्कर्षाय स्वयोग्यतानुसारेण निरन्तरं आयासशीलता च राष्ट्रियतापदेन प्रोच्यते । राष्ट्रियताशब्दः तदैव अन्वर्थो भवति यदा तत्रत्यः जनः तद्राष्ट्रस्य भूमौ संस्कृतौ भाषायाञ्च अत्यन्तं प्रीणितः । किञ्च राष्ट्रभूमिसंस्कृतिभाषासु निष्कपटं यन्ममत्वं वर्तते तद्राष्ट्रियतापदेन प्रोच्यते ।

वैदिकसाहित्यदृष्ट्या राष्ट्रियतातत्त्वस्य चत्वारि बीजानि

(क) मनुष्य आत्मानं राष्ट्रस्य महत्त्वपूर्णमङ्गं स्वीकुर्यात् ।

यथा—

**'अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः' ।**

**(अथर्ववेदः ३.५.२)**

(ख) यत्र राष्ट्रे जन्म लब्धं तत्र गौरवम् अनुभवतु । तद्यथा—

**प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ।**

**(ऋग्वेदखिलः २.४.७)**

(ग) राष्ट्रियजनस्य स्वजन्मभूम्यां मातृत्वदृष्टिः, यथा मातूरक्तमांसादिभिर्बालकस्य देहो निर्मीयते तद्वत् तच्छरीरस्य भाविनो विकारा मातृभूमिसमुद्भूतैः अन्नरसादिभिः सञ्जायते । तस्माद् मातृभूमिरेव जननी । अथर्ववेदस्य प्रथिते पृथिवीसूक्ते अयमेव भावो ऋषिणा सूचितः, स विश्वसाहित्ये दुर्लभः यद्वत् जननी सुतं पयः पाययति तद्वत् समुत्पन्नः बालकः जनन्या पृथिव्या पाल्यते । अपि च केचन एवम् अवधारयन्ति यत् अथर्ववेदीयपृथिवीसूक्ते भूमिशब्दः भूमिपदार्थको नास्ति । तेषां कथनमिदं न युक्तम् । सूक्तमन्त्रा एव अत्र विषये प्रमाणभूताः सन्ति । यथा—

**"सा नो भूमिः पूर्वपेयै दधातु" ।**

**(अथर्ववेदः १२.१.३)**

**"सा नो भूमिर्गोष्वप्यन्नै दधातु" ।**

**(तस्मिन्नेव सूक्ते ४)**

**"भगं वर्चः पृथिवी नौ दधातु" ।**

**(तत्रैव ५)**

**"सा नो भूमिः प्राणमायुर्दधातु" ।**

**(तत्रैव २२)**

सर्वत्रात्र नो अर्थात् अस्माकम् इति शब्दस्य प्रयोग आत्मभूमिं राष्ट्रभूमिं मातृभूमिं स्मारयति प्रमाणयति च । वैदिकर्षिणा या भूमिर्मातृभूमिरुच्यते सा भारतराष्ट्रस्य भूमिरेव भण्यते—

**"ग्रीष्मस्तै भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।**
**ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम्" ॥**

**(तत्रैव पृथ्वीसूक्ते ३६)**

सत्यसंरक्षणे स्वसमर्पणभावः राष्ट्रभूमिर्बीजानि प्रदर्शितानि तत्र श्रद्धा राष्ट्रियतायाः निदानं दरीदृश्यते । वेदप्रदर्शितभावोपेता राष्ट्रियता यस्य हृदये वर्तमाना स मानवः राष्ट्रैकतायाः संरक्षणे अवश्यमेव प्रभुर्भवति । वैदिकेषु ऋषिषु राष्ट्रमधिकृत्य कीदृशी प्रबला भावना दृश्यते तदध्ययनेनैव प्रतीयते । वैदिकैः ऋषिभिः तानि निखिलानि तत्त्वानि प्रतिपादितानि, यैः प्रेरितो जनो राष्ट्रभावं प्राप्नोति । तस्मात् इमे ऋषयः कामयन्ते स्म यत्—राष्ट्रविरोधीनि तत्त्वानि वृद्धिं नाप्नुयुः । वैदिकप्रतिपाद्यानुरोधेन ब्रह्मशक्तिः क्षत्रियशक्तिश्च राष्ट्रधारिण्यौ वर्तेते । तस्मादनयोर्मिथो विरोधे राष्ट्रम् अस्थिरं भवति । यदा क्षात्रशक्तिः ब्रह्मशक्तिम् अवमानयति तदानीं राष्ट्रं नाशम् एति । यत्र राष्ट्रस्य संरक्षणप्रशासनादिव्यवस्थां कुर्वन्तः क्षत्रियशासकाः बुद्धिमन्तो ज्ञाननिष्ठाश्च ब्राह्मणा मिथो भावनायुक्ताः सम्मानयुक्ताश्च भवन्ति स देशः समृद्धः समुन्नतश्च भवति । तथा च राष्ट्रगीततया श्रुतौ— "युक्तमना भवति" "युक्तमेव जयते" "सत्यमेव जयते" इत्यादि वैदिकर्षिः एवमपि अनुभवति यत् अस्मिन् देशे नैकभाषाभाषिणो

नानाविधधर्माचाराश्च वर्तन्ते । इदं वैविध्यं सदपि राष्ट्रैकतायाम् बाधकं न भवति । ऋषिः राष्ट्रं गृहरूपेण अनुभावयति । अस्मिन् गृहे भिन्नमतयो भिन्नस्वभावा भिन्नवयसश्च मनुष्याः परस्परमात्मीयभावेन निवासं कुर्वन्ति । इमाम् उदात्तभावनां तत्र पश्यन्तु यत्र एकस्मिन् राष्ट्रे न कोऽपि महान् न वा कश्चन कनीयान् न वा कोऽपि उत्तमो न वा कोऽपि अधम इति वैदिकसाहित्ये समुद्घोषः । यदा परस्परम् उत्तमाधमभावः तदा मिथो द्वेषो वर्धते वर्गभेदोऽपि जायते इदमेव वैदिकसाहित्यं ब्रूते । अत्र बह्वृचवेदः वक्ति—यत् अक्षिनासिकाकर्णादिदिशा समानाः सर्वे परन्तु मनसि साम्यं न लक्ष्यते तद्यथा—

**"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः"** ।

संबाधस्य स्थितौ राष्ट्रं क्षीणं भवेत् । तस्मात् स कथयति संज्ञानसूक्ते—

**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**

**देवा भागं यथा पूर्वे संजानाना उपासते ॥**

**(ऋक्० १०.१९२.२)**

मातृभूमिसन्दर्भे असंबाधं कामयतेऽन्यत्र चतुर्थवेदादावपि भूमि-सूक्तादिषु ।

ऋग्वेदस्य चरमं सूक्तं नाटकेषु भरतवाक्यमिव राष्ट्रहितभावनानु-रूपं वस्तुतो राष्ट्रैकतास्थितये सह व्रजन् मिथो वार्ता सद्ध्यानादि-प्रेरणातत्त्वानि श्रुतिषु भूयो भूयः विवेचितानि वर्तन्ते ।

पूर्वस्मिन् काले भारतीयमानवाः कार्यपूर्तौ वक्ष्यमाणान् मन्त्रान् राष्ट्रगीततया गायन्ति स्म । तद्यथा—

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्यआ ।
इडस्पदे समिध्यसे स नो वसून्या भर ।।
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ।।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ।।
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ।।

(ऋक्० १०.१९१.१-४)

वैदिकराष्ट्रैकताभावना भारतदेशनिवासिभिः स्वीक्रियेत, तदा पृथग्वादोग्रवादजातिवादादीनां दुष्टविचाराणां शमनम् अवश्यं भविष्यति। राष्ट्रैकतायां मिथो वार्ता अवश्यं स्यात् । यदा कोऽपि आत्मश्रेष्ठता-भावनया अपरेण साकं वार्तां न कुरुते, तदा एकताया हानिर्जायते। अथर्ववेदः इदमेव उपदिशति;

"अन्यो अन्यस्मै वल्गु वदन्त एते ।।

अस्यायमर्थो यत् मिथः प्रियं वदेत् । इदमेव यजुर्वेदमन्त्रोऽपि ब्रवीति;–

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।
ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च ।
प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुप मादो नमतु ।।" (शु० य० २६.२)

तद्यथा—

**येन॑ दे॒वा न वि॒यन्ति॒ नो च॑ विद्विषते॑ मि॒थः ।**

**तत् कृ॑ण्मो॒ ब्रह्म॑ वो गृ॒हे सं॒ज्ञानं॒ पुरु॑षेभ्यः ॥**

(अ०वे० ३.३०.४)

एवं रीत्या राष्ट्रैकतायां वैदिकसंहितासु केचन मन्त्राः अत्र प्रबन्धे प्रदर्शिताः । तत्र च अस्मिन् परिच्छेदे संक्षिप्य विचारः प्रस्तुतः । अद्यत्वेऽपि वैदिकसाहित्यप्रतिपादितप्रेरणावलम्बनेन राष्ट्रियतायाः संघटनस्य सर्वतोभावेन सम्भावना भवितुमर्हति । अत्र विषये विद्वांसः कथयन्ति यत् अस्माकं भारतराष्ट्रस्य गीताध्ययनेन रामायणकथाध्ययनेन कालिदासस्य ग्रन्थावलोकनेनैव च सर्वतोभावेन चिरस्थायिकल्याणं भवितुमर्हति । सनातनधर्मावलम्बनेन च भारतीयतायाः पोषणं सम्भाव्यते । पूर्वस्मिन् काले स्मृतिपुराणोपपुराणेतिहासादिप्रतिपादितपरम्पराम् अनुसरन्तः तदनुष्ठानतत्पराश्च मनुष्याः आसन्, तदा इदं समग्रमपि भारतराष्ट्रं वसुधैव कुटुम्बकम् इति भावनया—परिपूर्णमासीत् । जगत्यां जनाः जगत्कल्याणञ्च कामयन्तः परां लौकिकीं पारलौकिकीं च शान्तिम् आप्नुवन् ।

इदानीमस्माकमयं भारतदेशो वैदेशिकानां अपसंस्कृत्याऽऽक्रान्तोऽस्ति । आहारे व्यवहारे वस्त्रादीनां च परिधाने पाश्चात्त्यानामन्धानुकरणाच्च भृशं कलुषितोऽत्रत्य युववर्गः । परमकल्याणभूतस्य वेदस्य तदनुसारि-स्मृतिपुराणेतिहासादिशास्त्राणां तिरस्कारेण वैदेशिकाचारादिषु अनुरक्तः कदाचरणं करोति । महाजनानुसेवितां पद्धतिमनादृत्य विरुद्धमेव आचरन् सर्वथा अशान्तः परिलक्ष्यते । अतः यदि पुनरपि युववर्गः शिष्टैः समाचरितां वैदिकीं परम्पराम् अनुमोदितां विचाराचारपद्धतिं

प्रति अत्यन्तं श्रद्दधानः स्यात् तदैव अस्य देशस्य एतन्निवासिनाञ्च कल्याणभूमिः प्रशस्ता स्यात् इति निर्विवादम् अस्मत्सम्मतं मतमित्यत्र मनागपि नास्ति शङ्कापङ्ककलङ्काङ्कलवलेशक्लेशोऽपीति दृढं व्याहर्तुं शक्नोमीत्यलम् ।

**समस्तवेदोदिततत्त्वसिन्धुपीयूषयूषाढ्यनिबन्धरत्नम् प्रपठ्यभूयो**
**विदुषां समाजाः सदा सदाचाररता भवन्तु।**
**श्रीविश्वनाथस्य च शिष्य एष निरञ्जनस्यापि तथैव शिष्य**
**रवीन्द्रनाथोऽहमहो प्रणत्य गुरुद्वयं चालिखमत्र किञ्चित्।।**

इति श्रीरवीन्द्रनाथभट्टाचार्यवेदमीमांसाचार्यवेदमीमांसा-
व्याकरणतीर्थनव्यन्यायनव्यव्याकरणरत्नविरचितं
वैदिकराष्ट्रतत्त्वचिन्तनं समाप्तिमगात् ।
।। श्रीविश्वनाथचरणे समर्पितमस्तु ।।

## ग्रन्थकर्तुः प्रकाशितग्रन्थाः

१. सारमञ्जरी (शब्दशास्त्रीयतर्कसम्मतसमीक्षा )
(प्रकाशकः "रामकृष्णमिशन इन्स्टीट्यूट ऑफ् कल्चर" गोलपार्क, कलिकाता महानगरी)

२. श्रुतिसम्मतभगवदवतारतत्त्वसमीक्षा
(प्रकाशकः "स्वामी सन्तदास इन्स्टीट्युट ऑफ् कल्चर" १०१ सउदर्न एवेन्यू, कलिकाता महानगरी)

३. धातुरूपदीपिका

४. णिजन्तादिनामधातुपर्यन्तानां धातूनां रूपवैचित्र्यम् ।
(प्रकाशिका "माता श्रीमती चन्द्रावली देवी" १४३-ए, रासबिहारी एवेन्यू कलिकाता महानगरी

५. वैदिकराष्ट्रतत्त्वचिन्तनम् ।
(प्रकाशनस्थानम् "मात्रानन्दमयीपौराणिकवैदिकाध्ययनानुसन्धानसंस्थानम्" नैमिषारण्यम्-सीतापुरम्, (उत्तर-प्रदेशः)

### प्रकाशोन्मुखपुस्तकानि

१. अर्थसंग्रहः २. न्यायप्रकाशः ३. पराशरस्मृतिः